॥ श्रीः ॥

श्रीकविमल्लभट्टहरिवल्लभकृतिषु

# श्रीजयनगरपञ्चरङ्गम्

## काव्यम् ।

तथा

(यलंकाराः, कान्तावक्षोजशतोक्तयः, शृङ्गारलहर्यः,

दशकुमारदशा, मुक्तकसूक्तानि, देवीस्तोत्रं च)

जयपुरमहाराजाश्रितेन गुर्जरभट्टेन

तेन स्वेनैव संशोध्य

मुम्बय्याम्

...जी दादाजी इत्येतेषां निर्णयसागरयन्त्रालये मुद्रापितम् ।

सन् १८९४ इसवी ।

श्रीः

शैलैर्बन्धयति स्म वानरहृतैर्वाल्मीकिरम्भोनिधिं
व्यासः पार्थशरैस्तथापि न तयोरत्युक्तिरुद्भाव्यते ।
वागर्थौ च तुलाधृताविव तथाप्यस्मत्प्रबन्धानयं
लोको दूषयितुं प्रसारितमुखस्तुभ्यं प्रतिष्ठे नमः ॥ १ ॥

॥ श्रीः ॥

# हरिवल्लभकाव्यभूमिका ।

सतोऽपि यस्य नामार्थौ नाध्यक्षौ क्वापि भेदतः ।
तद्रंरमीति सर्वत्र किमप्येकं महन्महः ॥ १ ॥

अयि सर्वत्र निरुपध्यसाधारणपरमवात्सल्यैकप्रसिद्धा विद्वांसः । इदं श्रीमद्भ्यो विदितं क्रियते । योयमहं संस्कृतजयनगरपञ्चरङ्गाद्यनेकनवनवसरसकाव्यकर्ता भट्टहरिवल्लभशर्मा कविमल्लः प्रक्रान्तः । जयनगरवास्तव्यः स खलु गुर्जरब्रह्मकुलोत्पन्नः प्रथमं शास्त्रमधीयानः सद्गुरुकृपोपलब्धवागुपासनः प्रायः कवितायामेव प्रबन्धशक्तिसंपन्नः समजनिषि । तेन मया पण्डितदुर्गाप्रसादप्रकाशितकाव्यमालाप्रशस्तिद्वयनिर्माणसमनन्तरं जयनगरपञ्चरङ्गं काव्यं व्यधायि । अत्र देवतानमस्कारा जयनगरस्य सामान्यविशेषाभ्यां वर्णनं पूर्वपूर्वेतरराजवर्णनं चित्रविशेषोद्धारोऽपि । किञ्च गौर्यलङ्कारादयः षडन्येपि मम सन्ति संदर्भाः । तेषु गौर्यलङ्कारे साहित्यविश्रुतास्ते शतमर्थालङ्काराः श्रीगौर्याः स्तुतिरूपेण यथाक्रमं निदर्शिताः । कान्तावक्षोजशतोक्तिस्तु स्फुटाभिधेयैव । इयं खलु श्रीनारायणभट्टैर्निर्मातुमादिष्टा । शृङ्गारलहर्यां संपूर्णविभावानुभावादिवर्णनपुरस्सरं प्रायिकः शृङ्गारः सकलः । कुमारदशायां पुनः सामान्येनैव एकसर्गे कथा दशानां दण्डिवर्णितानां शुभ्रा... ाम् । मुक्तकसूक्तेषु च नानाविधा अनन्विता बहुधा मम प्रथम-
मर्जुंपि सूचकाः श्लोकाः । देवीस्तोत्रे षष्ठे भगवत्याः श्रीमदेकलिङ्गरा-
अनुग्र कुलदेव्या धनुर्धर्याः स्तुतिः । संप्रति तदेवेदं सर्वमुम्बापुर्य्यां
नाभ्यम

 रराजगुरुभिरेतैरेव द्वित्रवर्षपूर्वं स्वीकृतमासीन्मत्काव्यप्रकटीकरणं परन्तु
या भा तत्तथा नाभूदिति स्वयमेवाहं मुद्रणीकरणरीतिविशेषानभिज्ञोपि कौतुकी
षि ।

१ न्तर्निवसन्नपि प्रसकलप्रत्येयपूर्वं यथा
कार्यारम
जानात्येव न कश्चनापि पुरुषः प्रज्ञावतामग्रणीः ।
चकत्वान
पुर्यपि सा तथेयमधिकाभोगा कियन्तो जनाः
कम्पिः
न्यत्रेत्यवधारणं न सहसा कर्तुं प्रगल्भायते ॥ १ ॥
यस्याः
ना देवीर पर्यायोक्तमर्थालङ्कारो व्यङ्ग्यस्यैव प्रकारान्तरेण वाच्यरूपत्वात् ।

प्राप्तेन मया निर्णयसागराधीश्वरतः श्रीश्रेष्ठतुकारामजावजीत्यभिधान्मुद्रितमकार्य्यत । तस्मात्प्रथममिदं स्वजनेभ्य इव निखिलकथनयोग्येभ्यो विद्वद्भ्यः सकराञ्जलिकं प्राभृतीक्रियते ॥

अपरेऽपि मम वैद्यकविषयाः प्रबन्धाः सन्ति ते तु न लोकोत्तरा[1] इति न प्रकटीकृता एवं नाना मुक्तका अपि ।

**यौष्माकः कृपापात्रविशेष इति नितरां निर्वृतोऽयं जनः ।**

तस्य खल्वेषा प्रायोभणितिः ।

क्व मिष्टमपि गोक्षीरं प्रातः सायं हि यन्नवम् ।
क्व पुनर्मम सूक्तं तत्प्रतिवारं नवं नवम् ॥ २ ॥

---

१ लोके हि तदुत्तर एव चमत्कारावहः ।

अथ

# श्रीकविमल्लभट्टहरिवल्लभकल्पितम्

# श्रीजयनगरपञ्चरङ्गम्

## (काव्यम्)

### प्रथमो रङ्गः १

### श्रीहरिर्विजयतेतमाम् ।

[1]विनायकं तं शिवपार्षदानां विनायकं देवमहं प्रणौमि ।
निनाय कं नाम विधिः प्रकर्षं विना यकं पूजितमात्मकार्ये ॥ १ ॥
हंसः स्वचञ्चूं पुरतः स्फुरत्सु यद्दन्तलेखांशुषु गानकाले ।
मुक्तास्रजां धूनयते धियोच्चैः सा मेऽनुकूलास्तु वचोऽधिदेवी ॥ २ ॥
संचारिते यत्पुरतः सिता[2]भ्रनीराजने भक्तजनैः समन्तात् ।
शुभ्रातपो हासतया विभाति सा श्रीर्ममोपर्य्यनु[3]कम्पितास्तु ॥ ३ ॥
मन्त्रु[4]प्रिया दिव्यतनूविधात्री दनूद्भवघ्नी हनु[5]हारिगात्री ।
अनुग्रहार्थं ननु काचिदीशा जनुर्भृतामस्तु धर्नुर्धरी सा ॥ ४ ॥
नाम्यम्बुधौ वीक्ष्य धवे[6] सपत्न्याः श्लेषान्मुहुर्हा[7]रलताद्युनद्याः ॥
या भाति रुष्टा यमुनेव यान्ती रोमावली साऽस्तु सुखाय गौर्याः ॥ ५ ॥

---

१ विधिरात्मकार्ये पूजितं यकं य एव तं विना कं नाम प्रकर्ष निनाय प्रापेति काक्वा। कार्यारम्भे यत्पूजनेनैव विधेः प्रकर्षलाभ इति प्रतीयते यमकमत्र शब्दचित्रम्। देवतावाचकत्वान्न गणदोषश्च वकारस्य अमृत वीजत्वात्प्रचयलाभोपि. २ कर्पूरनीराजने. ३ अनुपूर्वः कम्पिः कृपार्थकः. ४ निजाराधननवार्णादिमन्त्रप्रिया. ५ हन्वा कपोलप्रान्तेन हारि गात्रं यस्याः. ६ एतत्स्वनामविदिता गुर्जरदेशान्तर्गतामदावादनामकनगरगोपुरवहिर्विराजमाना देवीयमस्मदिष्टभूता. ७ पत्यौ.

कुर्यान्मदीयं कुशलं नितान्तं सा रोमराजिर्गिरिराजपुत्र्याः ।
निरीक्ष्य गङ्गां हरमस्तकस्थां जातेव या भाति मनागसूया ॥ ६ ॥
या भाति संलक्ष्य कुचाब्जकोशौ प्रोड्डीयमाना मधुपावलीव ।
देव्या भवान्या घन[1]संभृता सा रोमावली मत्कुशलं करोतु ॥ ७ ॥
देवीमि[2]लाभृत्तनयामजस्रं शिलाम[3]यीं तां शरणं प्रपद्ये ।
महेश्वरस्याऽपि महे[4]श्वरीत्वं यद्वाहनं सूचयते मृगेन्द्रः ॥ ८ ॥
यस्याः शरीरे हतदैत्यरक्तसंप्रोक्षणस्योपधिना चकास्ति ।
गच्छन्बहिर्विष्वगिव स्व[5]रोषः सा सुप्रसन्नाऽवतु कालिका नः ॥ ९ ॥
नग्नाऽपि या भूरिनिकृत्तदैत्यरक्तोक्षणेन स्वसिते[6]तराङ्गे ।
कौसुँ[7]म्भचित्रामिव नीलशाटीं वस्ते स्म सा वो[8]ऽवतु भद्रकाली ॥ १० ॥
दृष्ट्वेव हस्तस्थविकोशखड्गोद्द्योतेऽखिलं तत्स्ववपुः करालम् ।
या विस्मिता लम्बयते स्म जिह्वां सतां महाकाल्युदयाय सास्ताम् ॥ ११ ॥
ये घ्नन्ति दैत्यान्परितोऽखिलान्मृधे संदश्य संदश्यं[9] नखैरिवाक्षिभिः ।
चाचल्य[10]मानास्तरसा धृतायुधाः कालीकरा नः कुशलं दिशन्तु ते[11] ॥ १२ ॥
यस्याः पुरा पिञ्जि[12]तरक्तबीजरक्तप्रपानादिव सान्द्रभूता ।
न शोणताऽद्याप्यधरादपैति कात्यायनी कृन्ततु सा रिपून्नः ॥ १३ ॥
तत्कालरात्र्या[13]त्मकगात्रकाले ये दीपवत्प्रोल्लसतः सुरक्ते ।
काल्या दृशौ ते परिपीतसीधुमदोद्धुरायास्तनुतां शुभं नः ॥ १४ ॥
ज्वालामुखीं पञ्चमु[14]खादबिभ्यतीं भक्तैर्निशार्धे बलिभिः प्रसादिताम् ।
कृतस्मशानाकुलकाननस्थितिं शिवाय कामप्यहमाश्रये शिवा[15]म् ॥ १५ ॥

---

१ अविरलताभृतेति यावत्. २ इला भूस्तद्भृत्पर्वतस्तत्तनयाम्. ३ यथाश्रुतनामवित्ता काचिदस्तीह अम्बावतीराजप्रासादप्रतिष्ठिता सा भगवती. ४ तत्तादृशमहाहिंस्रसिंहाधिरोहेण स्पष्टमेवास्ति तस्या महेश्वरस्यापि महेश्वरीत्वं स्वामिनीत्वम्. ५ रोषस्यारुण्यवर्णनं कविसंप्रदायः. ६ श्यामले शरीरे. ७ कौसुम्भो रङ्गः स च शोणो भवति तेन चित्रा मध्ये मध्ये बिन्दुभिर्विच्छुरिता ताम्. ८ पातु. ९ परिणामानुप्राणितेयमुत्प्रेक्षा. १० अतिशयेन चलन्तः. ११ प्रसिद्धास्तवापीति च. १२ हत. १३ तस्या देव्या यत्कालरात्रिरूपं गात्रं तत्कृतिसमये. १४ शिवात्सिंहाच्च. १५ पार्वतीं फेरुपत्नीं च.

सदा ज्वलन्ती जठरान्तराले जीवान्समुज्जीवयतेऽखिलान्या ।
देवी जपापुष्पदलोज्ज्वला सा ज्वालाऽभिधा मद्विजयं तनोतु ॥ १६ ॥
सा संनिधानं भगवत्यजस्रं जयप्रदा श्रीविजया क्रियान्नः ।
ज्ञानं द्रवीभूतमिवाऽखिलं सत्प्रपीयते यत्सलिलं सुधीभिः ॥ १७ ॥
सा भूतनाथस्य समस्तगात्रव्याप्ताऽस्तु भूतिः कवि[2]मल्लभूत्यै ।
या भालसंलग्नतुषारभानोः परिच्युता चञ्चति चन्द्रिकेव ॥ १८ ॥
ताः शोभमाना विरलं करेषु त्वां शूलिनः पान्तु विभूतिरेखाः ।
ते ते प्रगाढाः सितसर्प[3]बन्धा याभिश्चलत्कान्तिभिराव्रियन्ते ॥ १९ ॥
समाकिरन्तं करतोऽमृतौघं[4] विभूतिपिण्डाधिकपाण्डुकान्तिम् ।
[5]गौरीमनोरागविधानदक्षं तमीश्वरं[6] नौमि तमीश्वरं वा ॥ २० ॥
यस्य प्रसूकाचविशेषकार्ध[7]बुद्ध्या शिरश्चन्द्रकलां स्थितोऽङ्के ।
आदर्शलग्नां मुखवीक्षणस्य काले गुहो[8] लाति शिवः सवोऽव्यात् ॥ २१ ॥
भूतापकृतौ[9] विमुखं भूतापकृतौ[10] पुनर्विमुखम् ।
अपि नरकपाल[11]मीशं भूयोऽहं नरकपाल[12]मस्मि नतः ॥ २२ ॥
देवस्त्रिपुरारिर्वः समस्तकार्यश्रिये भवतु ।
नुवतां बहु पुनरपि वः समस्त[13]कार्यश्रिये भवतु ॥ २३ ॥
अपि बद्धाहि[14]तनयं बद्धाहित[15]नयं पुनः ।
सकलत्र[16]महं वन्दे सकलत्रं[17] त्रिलोचनम् ॥ २४ ॥
अस्माकं गिरिजा[18]माता शङ्करश्च शिवा तथा ।
दुष्कृतीनां समस्तानां करोतु विनिवारणम् ॥ २५ ॥

---

१ इयं सर्वेषां सर्वशोकशातनैकमाहात्म्या सूच्चालितप्रतिभातरङ्गा श्रीमती भङ्गेत्युच्यते. २ तदुपपदः कविर्हरिवल्लभशर्माऽहम्. ३ बद्धाः शुक्लसर्पा इत्यर्थः. ४ पीयूषं भक्तेभ्यो मोक्षदानं च. ५ पार्वती स्त्रियश्च. ६ तं ईश्वरं तम्या रात्र्या ईश्वरं पतिं चन्द्रं च. ७ प्रसूर्माता मातुर्यत्काचस्य काचमणेर्विशेषकार्धस्तिलकार्धभागस्तद्धिया, ८ स्वामिकार्त्तिकः. ९ भुवस्तापकृतौ. १० भूतानामपकृतौ. ११ नरकात्पालयतीति तम्. १२ नराणां कपालानि मालात्वेन यस्य. १३ मस्तकेन सहिता अरयस्तेषामश्रीः शिरोविनाभावस्तस्यै. १४ बद्धा अहीनां तनया येन. १५ बद्धः अहितानां वैरिणां नयो येन. १६ सकलं त्रायत इति तम्. १७ कलत्रेण दारैः सहितम्. १८ गिरेर्जामाता छेदाद्गिरिजा पर्वतपुत्री माता जगन्माता.

सा वोऽस्तु गर्भीकृतनाभिदेशा शुभाय लक्ष्म्या लघुलोमलेखा ।
अन्तर्वसत्कृष्णकलेवरस्य च्छायेव या भाति बहिः स्फुरन्ती ॥ २६ ॥
दूरादवेक्ष्य गोपीः संहृष्यन्तं हसन्तमभियान्तम् ।
नृत्यन्तं क्रीडन्तं श्रये यशोदाकिशोरं तम् ॥ २७ ॥
उद्दिश्य विविधभावान्समभिमिलन्नातिदूरतो जयति ।
राधायाः कृष्णस्य च चुम्बदिवान्योन्यमीक्षणद्वन्द्वम् ॥ २८ ॥
कक्षाश्रितामपि हरी राधां पश्यन्मुहुर्मुहुर्जयति ।
अन्तर्मान्त्यवशिष्टा कियतीयं बहिरितीव जिज्ञासुः ॥ २९ ॥
निःशङ्कसकलगुरुभिः स्वस्वगृहे व्रजवधूभिरनवरतम् ।
संभुक्तश्चञ्चलदृग्बालविलासी प्रशस्यते कश्चित् ॥ ३० ॥
निखिलैः सुगाढमङ्गैरुपगूहन्राधिकां चिरात्कृष्णः ।
संचिक्रामयिषन्निव किञ्चिन्निजवपुषि गौरतां जयति ॥ ३१ ॥
कुब्जाया अपि यस्मात्कुब्जात्वेनोपलम्भनं नासीत् ।
गोसेवाफलभूतं तारुण्यं नमत कृष्णस्य ॥ ३२ ॥
व्रजयोषितां परासां परिहरणादिव पतिव्रतात्वस्य ।
फलितं पातकपटलं कृष्णत्वं नमत कृष्णस्य ॥ ३३ ॥
अनिमेषमभिमिषन्त्यौ श्रियं दृशौ केशवस्य चिरकालात् ।
जयत इव वाचयन्त्यौ भावविशेषाँस्तदीयहृल्लिखितान् ॥ ३४ ॥
यः शोभते भ्रमर इव तुलसीस्फुटमञ्जरीपु कीर्णासु ।
शालिग्रामाय घनश्यामाय नमाम्यहं तस्मै ॥ ३५ ॥
जयत्युपायैरपि या न लब्धास्तैस्तैरहो ता इह सन्ति सर्वाः ।
गोप्यस्तवैपेति कृपा नमन्तं शक्रं हसन्नद्रिधृतौ मुकुन्दः ॥ ३६ ॥
पराङ्मुखं भोगविधौ वधूनां बुद्धावतारं प्रणतोस्मि विष्णुम् ।
तं वैपरीत्यादिव सूचयन्तं प्राग्भूरिभुक्ताङ्गनमात्मरूपम् ॥ ३७ ॥

१ मिथोमिलितत्वेन चुम्बनसंभावना. २ प्रेम्णा वपुरन्तर्निविशमानेव. ३ कृष्णः. ४ गावः पशुसजातीया एव तासां संगतिरूपा सेवा तत्फलभूतं विवेकविशेषमन्तरा कुब्जासंप्रयोगरूपं तारुण्यम्. ५ संमुखं पश्यन्त्यौ. ६ चित्तवृत्तिविशेषान्. ७ विष्णवे यो नीलोपलपिण्डमूर्त्तिर्भवति. ८ गोवर्धनधारणकाले. ९ स्त्रीभोगविमुखरूपात्.

आत्मोदये दर्शयतेऽन्यहेमशैलं सदा व्योमनि संध्यया यः ।
ज्योतिःस्वरूपः[1] स भवत्वजस्रं पापच्छिदे वः परमार्थदेवः ॥ ३८ ॥

शिष्यस्य यैः संविहिता प्रशंसा गर्हायते तेद्यति[2] सा तथा च ।
इत्यद्भुतालौकिकगौरवेभ्यः श्रीमद्गुरुभ्यः सततं नमोऽस्तु ॥ ३९ ॥

भूमिर्हतेः संशय[3]चिन्तयैव शून्या भवेन्मन्दधियाममीषाम् ।
इतीव धात्रा निजसंनिभेभ्यो विनिर्मितेभ्योऽस्तु नमो गुरुभ्यः ॥ ४० ॥

यत्नैर्बहुभिरपोह्यं[4] दुष्टानां सकलमेव दुष्टत्वम् ।
अल्पीयानपि चरणं कण्टकखण्डो हि पाचयति ॥ ४१ ॥

अत्यल्पेप्यनुबन्धे[5] करोत्यनर्थं[6] महान्तमाश्वेव ।
अशुचिजलबिन्दुरेकस्तथाऽपरः खलु जनः पिशुनः ॥ ४२ ॥

नासाकफो नृशंसैश्च[7] दूरीकर्तुं हि युज्यते ।
संश्लिष्टः सोऽन्यथा स्निग्धः[8] सहसा न निवर्तते ॥ ४३ ॥

[9]अप्रतिभानां वाणी प्रोत्पादितमर्थमन्यपुरुषेण ।
आदत्ते सानन्दं दत्तकमिव पुत्रमङ्गना वन्ध्या ॥ ४४ ॥

निर्मूलघातात्प्रतिघानलस्य[10] विवेकपाथो हृदलञ्जरस्थम्[11] ।
उपैति शोषं न कदाऽपि येषां जयन्ति ते केऽपि महानुभावाः ॥ ४५ ॥

गुणा विधानात्परिशीलनस्य न सन्ति केषामपि भूरिदूरे ।
प्रकुट्यमानाः[12] किल शालयो हि क्रमाद्भवन्ति स्वयमेव शुभ्राः ॥ ४६ ॥

कुरुतेऽनृतमपि सत्यं कथनात् प्रथमः परोऽपि लेखनतः ।
भेदोस्त्ययमेव कवेश्चित्रकरस्य च समं[13] शिष्टम् ॥ ४७ ॥

---

१ सूर्यः. २ सा स्तुतिरिवाचरति: ३ तत्तद्दुरूहार्थाज्ञानजन्यचिन्तया. ४ दूरीकरणीयम्. ५ संबन्धे व्यवहारे च. ६ पुनर्यथास्नानादिकरणं तत्तदर्थानिष्पत्तिरूपं च. ७ क्रूरः. ८ चिक्कणतायुक्तः कृत्रिमप्रेमयुक्तश्च. ९ यथा खल्वशिश्वी स्त्री परकीयं पुत्रं दत्तकत्वेन गृहीत्वा तदुपनयनपाणिपीडनादिकरणेन तस्मिन्स्वकीयबुद्धिं सानन्दं सप्रकाशं च प्रख्यापयति तथैव अचमत्कृतबुद्धिमतां केषांचिद्वाणी परोद्भावितमर्थं स्वकीयत्वेन आदत्त इति तदनौचित्यं वर्णितम्. १० रोषाग्नेः. ११ हृद्रूपकुम्भविशेषस्थम्. १२ मुसलाभिघातैर्निस्तुषीक्रियमाणाः. १३ सदृशम्.

पाहि जनार्दन रक्षितभक्तजन संहृतदुर्जन गोपपते हे पाहि
व्रजवनिताजननवयौवनघनलुण्ठनलुब्धमते हे ।
अर्जुनवदननिषिक्तसनातनतत्वकथा[1]नघतोयतते हे
कुरु कुशलं हरिवल्लभविदुषो देव पुराण[2]यते हे ॥ ४८ ॥
श्रीकुन्दननन्दनहरिवल्लभकविमल्लपल्ल[3]विते ।
[4]जयनगरपञ्चरङ्गे काव्येऽगात्प्रथमरङ्गोऽयम् ॥ ४९ ॥

---

## द्वितीयो रङ्गः २

कच्छान्व[5]यिच्छत्रधरानुशिष्टा चञ्चच्छतक्रौशिकसीमचक्रा ।
वर्षेऽस्ति का[6]चिज्जयपुर्यमुष्मिन् ढुण्ढारदेशाग्रिमराजधानी ॥ १ ॥
आम्ना[7]यमुच्चारयतां नितान्तं प्रतिश्रुतिर्यत्र महीसुराणाम् ।
ऋचाधिदेव्याः स्तवनप्रियाया वरप्रदानोक्तिरिवावभाति ॥ २ ॥
स्फारोरुदुर्गस्थितिशालिघण्टीयन्त्रं चलद्यत्र समस्तपौरान् ।
संवन्धिवत्स्वस्वकृतेरभीक्ष्णं टणत्कृतैः सूचयतेऽवकाशम् ॥ ३ ॥
प्रत्यालयं रुच्यतराण्यमूनि यस्यामितीवालिखितप्रशस्त्याः ।
पाश्चात्यभागारुणकाचभाञ्जि प[9]त्रश्रियं बिभ्रति जालकानि ॥ ४ ॥
प्रलोभयन्ती ललनेव भा[10]वैर्नानाविधैर्ग्राहकपौरवर्गान् ।
चकास्ति तत्तद्वरवस्तुपूर्णा हट्टावली राजपथेषु यस्याः ॥ ५ ॥
प्रायेण रिक्तीक्रियते प्रभूतैर्यस्यां सुराणां ब[11]हुमन्दिरैर्द्यौः ।
प्रपूजिता मर्त्यगणैः सदा यत्ते तत्र गच्छन्ति न भोग[12]लुब्धाः ॥ ६ ॥
वप्रोत्तमाङ्ग[13]स्थजनैरजस्रं वीथ्या तरूणां पथि पथ्युपेता ।
क्रीडागृहाकीर्णसमग्रदेशा प्रसूनवाटीव निरीक्ष्यते या ॥ ७ ॥

---

१ जगत्तत्वकथा. २ पुराणमुने. ३ कृतप्रकाश इति भावः. ४ जयनगरस्य राजमार्गस्थितराजकेतनतुल्यतयोत्प्रेक्षिते काव्ये. ५ कछावा इति प्रसिद्धाः. ६ भूखण्डे. ७ वेदम्. ८ कालप्रमाणसूचका दुर्गोपरिस्थिता घडी इति प्रसिद्धा. ९ तादृशप्रशस्त्याः पत्रश्रियम्. १० विभ्रमैः क्रयादिस्थितिभिश्च. ११ स्वर्गलोकः. १२ असकृन्नानाविधसुस्वादुभोजनादिलुब्धाः. १३ प्राकारोपरिस्थितजनैः.

अव्याहतं मासिकलाभतुष्टाः स्फूर्जत्कला हारिमुखाः सुमध्याः ।
पान्थान्प्रपापाल्य इवाम्बुनाल्यो यस्यां तृषार्तोन्वित तर्पयन्ति ॥ ८ ॥
विशंकटस्वच्छतराशयासु द्वारोपरिष्टाल्लिखिताभिधासु ।
प्रकुर्वते चंक्रमणं यथेच्छं दिवानिशं यत्पदवीपु लोकाः ॥ ९ ॥
यदीयदूरोन्नतपीनवप्रच्छायातले धीरचलत्समीरे ।
जना वसन्तो विधया कयापि संविद्रते नो खलु मित्रतापम् ॥ १० ॥
दूर्वादलानां यदुपात्तधान्यक्षेत्रेषु वातोद्भवकम्पदम्भात् ।
मुहुर्मुहुः शंसति शालिगोपीशृङ्गारगीतैः पुलकोद्गमं भूः ॥ ११ ॥
नितम्बवत्यो मणिबन्धमध्यभ्राजिष्णुचूडावलयावलीनाम् ।
झलत्कृतैर्यत्र शिरोगृहस्था भास्वन्मयूखान् सततं हसन्ति ॥ १२ ॥
ज्योत्स्नोज्ज्वलायां निशि यत्र कूपप्रान्तेषु जम्बालवती धरित्री ।
करोति दूरादुपकण्ठशाखिच्छायाभ्रमं पान्थजनस्य चित्ते ॥ १३ ॥
उद्यद्विवस्वत्किरणैः प्रभाते संरज्यमानाऽखिलवप्रचक्रा ।
आपाटलां या परिधातुमन्यां नवां समुत्कीलयतीव शाटीम् ॥ १४ ॥
यत्रान्तरिक्षं निशि भासमानसमस्तनक्षत्रचितं तनोति ।
उत्तानिताशुक्लमहावितानव्यालम्बिदीपावलिसाम्यलीलाम् ॥ १५ ॥
भृताम्बुसंक्षालिततीरदेशे सदा तडागे प्रतिबिम्बिता या ।
संभाव्यते दर्पणमण्डलान्तर्मुहुर्मुहुः स्वं मुखमीक्षमाणा ॥ १६ ॥
यत्रोच्चकैर्भाग्यवतां गृहेषु चित्रोच्चयाः केऽपि विशिष्य दृश्याः ।
नाकेऽभितो यत्प्रतिबिम्बितानि दधत्यकालेऽप्यृजुरोहितत्वम् ॥ १७ ॥
हरिद्रसालच्छदगुम्फिताभिर्यस्यां गृहा वन्दनमालिकाभिः ।
बहिः प्रतीहारखसंदिताभिर्दूराद्दधन्ते मुखकेशशोभाम् ॥ १८ ॥
चित्राः पटैः पैत्यजुषोऽङ्गरागैः श्यामा अहो लोचनकज्जलैश्च ।
दन्तप्रकाशैर्विशदास्तथापि कुर्वन्ति नॄन्यत्सुदृशोऽनुरक्तान् ॥ १९ ॥

---

१ स्फूर्जन्त्यः कलाः कल इति प्रसिद्धा यासां ललनापक्षे ताः केलिकलाः. २ जलकी टूंटी इति प्रसिद्धाः. ३ भट्टोंकारास्ता गणगौरी बाजार इत्यादिनानाविधा अभिधाः. ४ सुहृदां सूर्यस्य च तापम्. ५ इन्द्रधनुर्भावम्. ६ हरिद्वर्णाः. ७ डाढी इति प्र. ८ रक्तवर्णान् प्रणयिनश्च.

सुयोषितां भूरि गतागतानि तत्तत्पथेभ्यः प्रतिकुर्वतीनाम् ।
आलोककाले हि सहस्रनेत्रं[1] यद्वासिनः संस्तुवते पुमांसः ॥ २० ॥
नाना[2]देशाशालिजनाचितानामन्तर्निषण्णत्रिदशप्रणुन्नाः ।
यत्सत्पथे संचरतां रथानां पुरो विमानौ[3] अपि नो समानाः ॥ २१ ॥
अत्युच्चवंशाग्रविलम्बमाना गृहे गृहे यत्र समीरणेन ।
उद्वेल्लिताः क्षौमगताः पताका विलज्जयन्ति द्युनदीतरङ्गान् ॥ २२ ॥
करेणुकामन्थरगत्वरीणामितस्ततो यत्र सुलोचनानाम् ।
मुखेन्दुपीयूषनिचूषणार्थं दिवाऽपि चञ्चन्ति चिरं चकोराः ॥ २३ ॥
यत्रोषसि प्रांशुतरं पुरस्थैरुड्डायिताः स्वस्वगृहात्क्रमेण ।
क्रीडाकपोता गगने सदैव कुर्वन्ति विस्फूर्ज[4]दुडुप्रतीतिम् ॥ २४ ॥
यत्सीम्नि सीट्[5]कृत्युपधेः सहेलं फिरङ्गिवाह्या रयलौः शकट्यः ।
वास्यं न युष्माभिरिहाल्पभाग्यैरित्याह्वयन्तीव विदेशिलोकान् ॥ २५ ॥
क्वचित्क्वचिद्यत्र विलोच्य दूराद्रत्नानि रत्नापणिकोपकण्ठे ।
ज्वलन्ति दीपाः कथमह्न्यपीति ग्रामीणलोकाः पुरु विस्मयन्ते ॥ २६ ॥
स्त्रीणां जलोदञ्चनकर्मकाले यत्राधिकूपं प्रतिमा विभान्ति ।
अभ्युद्गतारूपनिरूपणार्थं रसातलान्नागसुता इवोर्ध्वम् ॥ २७ ॥
पौरप्रणुन्नाः पदवीषु यस्याः समुत्प्लवन्ते तरलं तुरङ्गाः ।
वेश्मावलीद्वारविशालभित्त्योराचित्रितानां करिणां भियेव ॥ २८ ॥
यस्यां कपोतीरनुकूजतां च हर्म्यच्छदिस्थायिकपोतयूनाम् ।
संडीन[6]मुद्वीक्ष्य पथि व्रजद्भि[7]र्न स्मर्यते कैः स्वकलत्रमानः ॥ २९ ॥
गायन्ति यद्वर्त्मसु हिण्डमाना गीतानि शृङ्गारमयानि नार्यः ।
नूनं[8] तदा वाद्यगतां स्वसत्तां धत्ते ध्वनिस्तत्तदलङ्कृतीनाम् ॥ ३० ॥

---

१ स्वस्य तादृशसहस्रनेत्रासत्त्वात्. २ अवस्था. ३ विशेषण मानो येषां तथाविधा अपि एतेन रथेषु महान् व्यतिरेकः सूचितः. ४ कश्चिच्चिरवेगः पृथुः शब्दविशेषः. ५ रेलगाडी इति प्र. ६ संगतं गमनम्. ७ गच्छन्त्यः. ८ तासां भूषणध्वनिः स्वस्थितिं वाद्यगतां धत्ते गायनवादनयोः साहचर्यमेव योग्यम्.

यत्र प्रगे वेश्मपरम्पराणामभ्रंलिहानां प्रसृता पुरस्तात् ।
छाया भियेवोष्णगभस्तिभर्तुः संतिष्ठते गूढतरं निलीय ॥ ३१ ॥
सायं[1] गवाक्षप्रतिरन्ध्रसर्पज्जात्यादिसंसाधिततैलगन्धाः ।
यस्यां युवभ्यो ध्वनयन्ति केशप्रसाधनं श्रेष्ठिसुतप्रियाणाम् ॥ ३२ ॥
प्रादोपिकी यत्र ललामभूता पितृप्रसूः फुल्लति नाकगर्भे ।
नानाविधारञ्जितनूतनोपसंव्यान[2]संक्रान्तिरिवाङ्गनानाम् ॥ ३३ ॥
स्त्रीणां नवानां पुरतोञ्चलेऽपि विधूनिते गन्धवहेन यस्याम् ।
कैश्चित्स्फुटच्चम्पकपत्रचारु वासोन्तराश्लिष्टमिवेक्ष्यतेऽङ्गम् ॥ ३४ ॥
तारुण्यभाजां वरवर्णिनीनां संचारसाम्याधिगमाय मन्ये ।
मतंगजान् हस्तिपका[3] यदीयमार्गेषु नित्यं परिवर्तयन्ति ॥ ३५ ॥
यस्यां चलत्तोपमहानिनादाञ्श्रुत्वा मयूरा अधिचन्द्रशालम् ।
भ्रान्त्याम्बुदानां शिरसि प्रकीर्णशिखण्डदण्डाः सुचिरं नटन्ति ॥ ३६ ॥
प्रान्तप्रदीपावलिदीपितेषु यद्राजमार्गेषु निबद्धभूमिः ।
गच्छत्प्रजासंक्रमणैर्निशायामसंकुलापीन्दति[4] संकुलेव ॥ ३७ ॥
सीमन्तिनीनां समुपागतानां यस्यां च पाथोभरणाय वाप्यः ।
विष्वग्भवत्तुङ्गतरङ्गभङ्ग्या विडम्बयन्ति भ्रुकुटीविलासान् ॥ ३८ ॥
यथायथं सुष्ठुतरं लपन्तः क्वचित्क्वचिद्यद्वलभीषु[5] कीराः ।
आकाशवाणीभ्रममादिशन्ति प्राघूर्णिकानां प्रथमप्रवेशे ॥ ३९ ॥
दाम्नां प्रसूनच्छदनेषु सायं यत्पण्यवीथ्यां स्वदृगन्तबिम्बान् ।
चलाचलान्वीक्ष्य धुनन्ति पाणीनलिभ्रमान्मालिकमुग्धवध्वः ॥ ४० ॥
यस्यां भृशं भर्तृषु केलिसद्मस्तम्भाद्भुतोल्लेखितशालभञ्जीः[6] ।
निर्वर्णयत्सु प्रणयेन काश्चित्स्त्रियो भवन्त्याश्रितमानलीलाः ॥ ४१ ॥
वैशान्तिकं[7] रात्रिमुखे चलद्भिर्यत्रोच्चरन्ती प्रतिगेहमध्यात् ।
निशम्यते वारकलत्रगीतिर्वसन्तबन्धोर्विरुदावलीव[8] ॥ ४२ ॥

---

१ संध्या. २ उपसंव्यानं वस्त्रम्. ३ आधोरणाः. ४ शोभते. ५ अट्टगृहेषु. ६ पूतली इति प्र. ७ सामान्यानामाश्रयः. ८ स्तुतिविशेष एव विरुदभिधेयम्.

क्षौमेषु नक्तं निजकान्तिजैत्रैः संधित्सुरास्यैः सह सुन्दरीणाम् ।
प्रग्राहवत्प्राप्तुमधोगभस्तीन्यस्यां समुल्लम्बयते हिमांशुः ॥ ४३ ॥
यत्राऽधिसायं धनवद्गृहान्तर्दंदह्यमानागुरुवर्तिकोत्थः ।
आकाशनीलिम्नि सदेक्ष्यमाणे निमित्ततां गच्छति धूम एव ॥ ४४ ॥
यद्धर्म्यगेहेषु नवाः सुधानां प्रलिप्तयो भान्ति सदा नितान्तम् ।
पौरैर्निशेशस्य विधृत्य रात्रौ सर्वत्र कौमुद्य इवाहि कीर्णाः ॥ ४५ ॥
परःसहस्राः किल यत्र पद्याः पद्योपपद्याश्च चतुष्पथानाम् ।
शोभां समाविभ्रति भूरिशाखाः शाखोपशाखा इव पादपानाम् ॥ ४६ ॥
यच्छ्रेष्ठिनां दारुचतुष्कराजिः सदा विपण्यग्रविनिविष्टमाना ।
श्रीणां श्रयत्यन्तरुपागतानां विश्रान्तभूयिष्ठविमानशोभाम् ॥ ४७ ॥
एतादृशाः के निवसन्ति यस्यां शृङ्गाररसंसिक्तहृदो युवानः ।
कुर्वन्ति गच्छद्वनितावपुष्षु नीराजनं ये न विलोचनानाम् ॥ ४८ ॥
विच्छन्दका यत्र वहूच्छ्रिताग्रा दुर्गोपरिष्टाद्विलसन्ति ते ते ।
कदा कदा वीक्ष्य वृषा विमानाद्यान्वष्टि निर्मापयितुं पुनः स्वः ॥ ४९ ॥
पुष्णन्ति विष्वक्पतयालवोभ्रे यद्ब्रह्मपुर्यां वसतां द्विजानाम् ।
यज्ञानलप्रोत्थितधूमवीथ्यो मन्दाकिनीशैवलखण्डशङ्काम् ॥ ५० ॥
सुसंभृते सर्वतरङ्गिणीभिः श्रीजह्नुकन्येव समुद्रमध्ये ।
नानापुरीपुञ्जसमन्वितेऽपि या भाति भिन्नैव जगत्यमुष्मिन् ॥ ५१ ॥
प्रयान्ति यत्संसरणेषु सायं स्वैरं विहर्तुं कतिचिद्युवानः ।
स्त्रियोऽपि कूपेष्वथ तत्र तत्र सखीभिरम्भोभरणच्छलेन ॥ ५२ ॥
यद्वासिपुंसां त्रिदिवौकसां च लक्ष्मीर्मयाऽलक्षि विभिन्नरूपा ।
प्राप्त्यालयौ खल्वमुयोः समुद्रामुद्रत्वविख्यातिमुपागतौ यत् ॥ ५३ ॥
यस्यां च वंशीगतिगायिनां चेत्कृष्णः पुरोऽद्यावधि सोऽभविष्यत् ।
असूयया किं न सुधेरर्थं समाश्रयिष्यन्निजनामयोग्यम् ॥ ५४ ॥

---

१ अट्टेषु. २ चतुस्तम्भमण्डपावली. ३ सौधविशेषाः. ४ इन्द्रः. ५ इच्छति. ६ तोपखानाहजारीबुरजब्रह्मकूपइत्यादिषु. ७ देवलक्ष्म्याः समुद्रः प्राप्तिस्थानं यद्वासिनां लक्ष्म्याश्च अमुद्रा गृहाः प्राप्तिस्थानम्. ८ सत्यः कृष्णनामानुकूलश्चासावर्थश्च तम्.

यच्छ्रेष्ठिकान्ताकबरीसुदृब्धमुक्ताफलश्रेणिसमत्वलब्ध्यै ।
कल्पैर्[1]दभ्रैरुडुसंनिवेशमभ्यस्यतीव प्रतियामिनि द्यौः ॥ ५५ ॥
यूनां शिरोवेष्टनकानि यस्यां कूर्पासकान्यब्जदृशां च नित्यम् ।
संदानकाले करकृष्टिरंहःसुदुस्सहत्वेन नवीभवन्ति ॥ ५६ ॥
शृङ्गाटकस्थाः किल यत्र दीपा गृहावलीप्राङ्गणगाश्च पार्श्वे ।
सुदूरगामिस्वपुरुप्रकाशा व्यर्थत्वदोषं मिथआश्रयन्ते ॥ ५७ ॥
आलोकनादेव कृतप्रहर्षान्सिद्धीभवत्सर्वविधित्सितार्थान् ।
स्वीयान् वयस्यानिव वीक्ष्य गेहाँस्तुष्यन्ति यत्रत्यजना अभीक्ष्णम् ॥ ५८॥
यस्यामरित्रं[2] तरिपृष्ठकाष्ठं ग्रामस्य धान्यं हि तथा विनीतम्[3] ।
ग्रीवान्त्यभागो हि तथाऽवर्द्धै[4]स्तु निःश्रेणिकैवास्त्यवरोहै[5]र्युक्ता ॥ ५९ ॥
वाद्यं हि वादित्र[6]तया प्रसिद्धं यस्यां पुनर्नो विदुषां तु वृन्दम् ।
तथा प्रदोषै[7]स्तु निशास्यमेव न विद्यते कश्चन मानुषस्तु ॥ ६० ॥
असुन्दरं[8] त्वायुधमेव यस्यामरातियुक्त[9]श्च शताङ्ग एव ।
अनूरु[10]रर्कस्य च सूत एव तथाग्निरेवास्ति किलाश्रयाश[11]ः ॥ ६१ ॥
असमा[12]श्च यद्यपि मिथः पुरुषा विलसन्त्यहो किल तथापि समाः[13] ।
दिवसानि यत्र च शुभानि तथा तिथि[14]र्भन्ति सन्त्यतिथि[15]मन्त्यपि हो ॥६२॥
यस्यां राजस्थाने विलोकितं किल मयैकमाश्चर्यम् ।
अधिकारिणामपि नृणां यन्नास्त्येवाधिकारित्वम्[16] ॥ ६३ ॥
अहह कुलीनानामपि पुरुषाणां यत्र नो कुलीनत्वम्[17] ।
अनुकारिणामपि मिथो नचानुकारित्व[18]मस्ति तथा ॥ ६४ ॥

---

१ प्रकारैः. २ अरिरक्षकं. ३ अविभिर्मेषैर्नीतम्. ४ न वर्द्धयत्र. ५ अवरः अश्रेष्ठ ऊहस्तर्कः. ६ वादिरक्षकतया. ७ प्रकृष्टा दोषा यस्मिन्. ८ असुंदणातीत्यसुंदरम्. ९ अरातिभिर्युक्तः. १० ऊरुरहितः. ११ आश्रयं स्वाधारमश्नाति सः. १२ भिन्नाः. १३ मा लक्ष्मीस्तयासहिताः. १४ प्रतिपत्प्रभृतयस्तिथयः. १५ अतिथयोऽभ्यागताः. १६ अधिकशत्रुमत्त्वम्. १७ कौ भुवि लीनत्वमपि. १८ अनुकानां कामिनां शत्रुत्वम्.

अजिनप्रीतीनामपि नास्त्यजिन[1]प्रीतिता यत्र ।
भूपतिबन्धुजनस्य च न महाकु[2]लता महाकुलस्यापि ॥ ६५ ॥
यस्यां निवसन्तीनां वैचित्र्यं समवलोचितं स्त्रीणाम् ।
परमरुचि[3]रता यासां यन्नास्त्यपि परमरुचिराणाम् ॥ ६६ ॥
यस्यां तापस[4]हत्वं हेम्न्येव पुनर्न राजपुरुषेषु ।
अनव[5]रतोपार्जनमतिरस्ति वणिक्ष्वेव न तु युवसु ॥ ६७ ॥
ऋष्यप्रो[6]क्ता तु यत्राऽस्ति शतावर्येव केवलम् ।
न पुनर्भूमिदेवानां कर्मकाण्डस्य पद्धतिः ॥ ६८ ॥
आराम एव विश्ले[7]षो न पुनर्यत्र योषिताम् ।
विशाख[8]श्च सुतः शम्भोर्न पुनः कश्चन द्रुमः ॥ ६९ ॥
यत्र दुग्धतडागस्य शङ्कया प्रांशुवेश्मसु ।
सुधालिप्तेषु वियतः प्रपतन्ति पतत्रिणः ॥ ७० ॥
कुण्डोपरितनचत्वरविहितस्थितिभिस्तु कैश्चिदपि ।
स्वास्वेव दृक्षु सकला सदा समावेश्यते सायम् ॥ ७१ ॥
मालाधराणामप[9]वृत्तिमप्यहो प्रकुर्वतां यत्र महीसुपर्वणाम् ।
मया तु कुत्राप्यप[10]वृत्तिकर्तृता नाऽकर्णिता नत्ववलोकिता तथा ॥ ७२ ॥

या शृङ्गाटकपर्यटत्पृथुरथप्र[11]ध्यन्तरोच्चावच—
व्याधूनोन्नतकि[12]ङ्किणीगणमहाप्रक्वाणगर्भा सदा ।
निःशेषाम्बरचक्रवालविपुलव्याघूर्णनप्रोद्यत—
प्रावृण्मेघघटाभवत्सुमधुरध्वानानिवाभ्यस्यति ॥ ७३ ॥
श्रीकुन्दननन्दनहरिवल्लभकविमल्लपल्लविते ।
जयनगरपञ्चरङ्गे काव्ये रङ्गो द्वितीयोऽगात् ॥ ७४ ॥

---

१ जिनभिन्नप्रीतिता न. २ महाव्याकुलता. ३ परं अरुचिरता. ४ तापसान् हन्ति तद्भावम्. ५ अनवरतं नित्यं उपार्जनमतिः. ६ ऋषिभिरप्रोक्ता. ७ वीनां पक्षिणां श्लेषः. ८ विगताः शाखा यस्य. ९ परिवर्तनम्. १० कुत्सितवृत्तिकर्तृता. ११ द्वयोः प्रध्यो रथचक्रधारयोरन्तरे मध्ये. १२ किङ्कणयः क्षुद्रघण्टिकाः.

## तृतीयो रङ्गः ३

पूर्वैः[1] श्रीजयपत्तनस्य पतिभिर्नाकौकसः प्रोत्सुकान्
सर्वान्दर्शयितुं स्वकीयनगरस्याभोगशोभां नवाम् ।
आकाशाभिमुखं महोन्नतमिदं मन्ये विनिर्मापितं
स्वःशूलीत्यभिधानतः[2] पृथुतरं निःश्रेणिकामण्डलम् ॥ १ ॥
वृद्धिं प्राप्य पतन्नधः किमु वियद्गङ्गाप्रवाहो महा-
न्किवा स्यन्दनविश्रमाय सवितुः स्तम्भः समुत्तम्भितः ।
मूर्धा वा नगरस्य किं त्रिजगतीं संद्रष्टुमुत्कन्धरः
स्वःशूलीं समवेक्ष्य चेतसि चलत्येपा विकल्पावली ॥ २ ॥
जायेतागमनं[3] विहायसि कथं नः क्ष्मातले तिष्ठतां
विज्ञप्तिं रसिकैरुदञ्जलि कृतां श्रुत्वा विमानेष्विमाम् ।
स्वःशूल्याकृतिना निपातितमिदं शक्राप्सरोभिर्ध्रुवं
रश्मीनां निकुरम्बकं वसुमतीपर्यन्तमालम्बते ॥ ३ ॥
एकस्थानत एव लोकविदिताँस्ताँस्तान्दविष्ठानहो
द्रष्टुं मङ्क्षु पृथक्पृथक्किमु भुवः खण्डान्नवाऽपि क्रमात्[4] ।
स्वःशूल्यामिह चक्रचारुरुचयः[5] खण्डा नवैवात्मनो
दाक्ष्यं व्यञ्जयितुं प्रजां जयपुरक्षोणीभुजा कारिताः ॥ ४ ॥
एषा विष्किरशब्दपूरितशिरःकुम्भोपरिप्रोच्चल-[6]
द्वाताभ्याहतकेतनस्य कपटात्स्वःशूलिकासद्मनः ।
उद्यम्याग्रकरं भृशं जयपुरी संतिष्ठमानां दिवि
स्वामालीममरावतीं[7] प्रणयतः क्षेमाणि किं पृच्छति ॥ ५ ॥
वाहानां[8] निजवैरिणः सुरपतेः पाथोमुचामुच्चकै-
रागत्योपरि गर्जतां चिरतरं दृष्ट्वावलीं प्रावृषि ।

---

१ ईश्वरीसिंहवर्मभिः. २ अस्तीह सुप्रसिद्धमेतन्नामकमष्टास्रं प्रांशुसौधं तत्. ३ अदिव्यानां तद्दुर्लभत्वमिति भावः. ४ तेन प्रत्येकं खण्डानां महोन्नत्यं व्यज्यते. ५ तस्य वर्तुलत्वात्. ६ कपोतादयः पक्षिणः. ७ इन्द्रपुरीम्. ८ तुराषाण्मेघवाहनः.

संक्रुद्धेन रसातलाधिपतिना मुक्तोऽस्त्यसौ किं [1]शरः
स्वःशूलीयमिति भ्रमं वितनुते चेतस्सु संपश्यताम् ॥ ६ ॥

प्राचीनं श्रितगिरिवृन्दशीर्षमम्बा-
वत्याख्याप्रथिततरं [2]वनाभिरामम् ।
[3]स्वावासं जयनगराधिदेवतेदं
स्वःशूलीगृहमधिरुह्य पश्यतीव ॥ ७ ॥

नेदं नभः किंतु महाविशालं नीलं वितानं जयपत्तनीयम् ।
स्वःशूलिकेयं नहि किन्तु तस्य समाश्रितो मध्यम[4]दण्ड एषः ॥ ८ ॥
उड्डीयमानान्प्रचुरान्कपोतान्संस्थापयन्ती शिखरे स्वकीये ।
स्वःशूल्यसौ राजमहावि[5]टङ्कभ्रान्तिं चिराच्चेतसि संचिनोति ॥ ९ ॥
हयप्रियैः श्रीजयपत्तनेन्द्रैश्छत्रं महोच्छ्रायमिदं हयार्थम् ।
उत्तानितं किं निजमन्दुरान्तः स्वः[6]शूलिकामित्यवलोक्य भाषे ॥ १० ॥
स्वःशूलिकाट्टालकतोरणानां स्तम्भेषु बद्धा विततः पताकाः ।
वर्षाम्बुभृन्मण्डलजातझम्पाः [7]शम्पा इवोच्चैः सततं स्फुरन्ति ॥ ११ ॥
किं विष्णुना वामनरूपभाजा मातुं पुनर्द्यां[8] स्ववितस्तिरेषा ।
दीर्घीकृतेति भ्रममादधाति स्वःशूलिकेयं जयपत्तनस्था ॥ १२ ॥
स्वःशूलिकायाः समतीतदृग्गतेः कियत्यशेषोन्नततेति निश्चयम् ।
शृङ्गाटकान्तःप्रसृता दिवाऽधिकं छायाऽर्दसीयैव करोत्यधःस्थिता ॥१३॥
लिखितुं जयनगरनुतिं कारुभिरभ्युन्नतीकृता गगने ।
किमु लेखिनीव काचित्स्वःशूली परिलसत्येषा ॥ १४ ॥
[9]अग्रावरोधयोगा श्रितनानाधातुरङ्गसांनिध्या ।
उपलसितसर्वभागा स्वःशूली शिखरसंनिभा भाति ॥ १५ ॥

---

१ एतेन सौधस्य दीर्घाकृतिरुच्यते. २ जलाभिराममपि तत्र सन्त्येव मावठो-रत्नाकरसागरकुण्डप्रभृतयो महाजलाशयाः. ३ तद्वासिपूर्वराजसन्ततिविशेषैरेव नगरस्य वासितत्वाद्युक्तएव तद्देवतायाः स आवासः. ४ चोभ इति प्र. ५ क्रीडाकपोताश्रयः. ६ एतेन सौधस्य राजनिशान्ताग्रस्थमन्दुरासीम्नि स्थितिरिति सूचितम्. ७ विद्युतः. ८ अमुष्या इयम्. ९ नास्ति ग्रावरोधयोगो यत्र तच्छिखरं अग्रे अवरोधयोगो यस्याः

नीचैः शिखरच्छदिषः संरघाछत्राणि सन्त्यमुष्या यत् ।
तस्मात्परिघाकारा सरघाशूलीयमन्वर्था ॥ १६ ॥
स्वःशूल्याः शिखरोपरि सकलकलो विलसितः कलानाथः ।
कलधौतस्य कलश इव कोऽपि समारोपितो भाति ॥ १७ ॥
दिवाधःप्रसृता बाढं छाया स्वःशूलिसद्मनः ।
विभाति राजसरणेरर्गलेवै क्षितिच्युता ॥ १८ ॥
इदं स्वःशूलिकादम्भाज्जयपत्तनभूभुजा ।
आकाशहर्म्यं प्रोत्तुङ्गं कारितं सुविलक्षणम् ॥ १९ ॥
अस्मात्स्वःशूलिकाक्षौमाद्दृश्यते जयपत्तनम् ।
चारु चित्रमिवालिप्तं पत्रे संचित्रितं क्वचित् ॥ २० ॥
नानाविधोच्चावचशृङ्गवृन्दां दृष्ट्वाकृतिं मारुतमन्दिरस्य ।
उत्खातशृङ्गाः किमु सर्वशैलाः संजायते धीः क्षणमात्रमेषा ॥ २१ ॥
परःशता यज्जयपत्तनीयसमीरसौधे बहुकाचजाले ।
स्फूर्जन्ति सूर्या इदमेव चित्रं ते सन्ति खे द्वादश नेति किञ्चित् ॥ २२ ॥
एतत्समीरसौधं छदि तिष्ठच्चटुलबहलकापोतम् ।
सततमिव चुम्ब्यमानं लसति सकलशिल्पिचेतोभिः ॥ २३ ॥
गन्धवहहर्म्यमेतत्सुवर्तुलं तुलितगोपुराकारम् ।
जयनगरशिल्पदेव्या भाति समुपवेशनोपधानमिव ॥ २४ ॥

---

सा स्वःशूली तथा श्रितं नाना गैरिकादिधातुरङ्गसांनिध्यं येन तथैव श्रितं नानाधास्थिततुरङ्गसांनिध्यं यया उपलैः सितो बद्धः सर्वभागो यस्य उपलसितः शोभितः सर्वभागो यस्या इति विभक्तिविपरिणामेन श्लेषगर्भितं स्वःशूलीगिरिशिखरयोः सादृश्यं सिद्धम्.

१ मधुमक्षिकागृहास्ते च च्छत्राकृतयो भवन्ति. २ भाषायां लौकिक्यां नामेदम्. ३ यद्यपि मार्गो अर्गला न संभवति तथापि संभावनायां चमत्काराय सास्ति. ४ सन्तीह हवामहल जलमहल बादलमहल इति सौधास्तस्मादाकाशमहल इत्यप्येतत्. ५ अत्युपरिष्टादधो वस्तु सुसूक्ष्ममेव दृश्यते. ६ हवामहल इति प्रसिद्धस्य. ७ सूर्याः. ८ शिल्पिचेतांसि यदर्थं वासनावशेन कपोतरूपं धृत्वा अतिसर्वसुन्दरे तत्र रमन्त इत्यर्थः. ९ यस्य गद्दीका तकिया इति प्रसिद्धिः.

विविधनतोन्नतशिखरोपरिस्थजाम्बूनदध्वजः स्फुरति ।
जालकगवाक्षपक्षकं[1]निचिताग्रः क्षितिपतेरनिलनिलयः ॥ २५ ॥
यस्यां त्रिपोलाह्वयगोपुरस्य कैरप्यवैषम्यमिदं न बुद्धम् ।
सिंहस्थितिर्यस्य यदेकतोऽस्ति तथैव सिंहस्थि[2]तिरन्यतोऽपि ॥ २६ ॥
त्रैपोलपार्श्वयुग्मे नक्तं जयपुरि समुज्ज्वलद्दीपौ ।
राज्याधिदेवताया जाग्रत्या लोचने इवोल्लसतः ॥ २७ ॥
जयनगरे दुर्गोपरि विराजते कूर्मरा[3]जसौधोऽयम् ।
सकलप्रजागृहाणां राजेव गजेन्द्रमधिरूढः ॥ २८ ॥
पार्श्वद्वये ज्वलन्ती जयपुरि शृङ्गाटकेऽखिले रात्रौ ।
राजप्रदीपपङ्क्तिर्वन्दनमालेव काचिदुल्लसति ॥ २९ ॥
वासुकिभवनभ्रमकृत्तालकर्कटोरा[4]ख्यसरसि यच्छाया ।
लसति नृपस्योपवने सौधं मेघ[5]प्रतिच्छन्दम् ॥ ३० ॥
सुदृढसुदर्शन[6]दुर्गे भान्ति नवीनानि राजसदनानि ।
इन्द्रविमानान्यभितस्तत्र स्थितभटविलुण्ठितानीव ॥ ३१ ॥
अम्बावत्यां पुर्यां महामहालम्बभित्तयो नृपतेः ।
विलसन्ति दुर्गसौधाः शिखरिण इव शिखरिणामुपरि ॥ ३२ ॥
अथो[7] बहिर्गोपुरमस्ति तस्या मुख्यं[8] परिच्छेदिषु[9] कौतुकानाम् ।
दृङ्निर्निमेषीकरणस्य हेतुरुद्यानमेकं भवदम्बुसेकम् ॥ ३३ ॥
यत्र प्रभाते स्थलपद्मकोशभवच्चटत्काररवैः प्रबुद्धाः ।
केदारिकाणां[10] वलयेषु मालाकाराः प्रणालीः[11] परिवर्तयन्ति ॥ ३४ ॥
मालाकृतः प्राकृतगानगाथाप्रोद्गायिनो यत्र चिरं प्रभाते ।
कर्षन्ति कुम्भानजिनस्य शब्द[12]मय्येव रज्ज्वा प्रहिवृन्दमध्यात् ॥ ३५ ॥

---

१ खिडकी इति. प्र० २ अत्रतनमहाराजमाधवसिंहानां प्रासादेषु स्थितिर्विशिष्टं शुद्धान्नातिरिच्यते. ३ कच्छसंज्ञकक्षत्रियराजा तस्य प्रकृतस्य राज्ञ एवेत्यर्थः. ४ अस्त्येतदिह ग्राहगणसंकुलमेकं तत्सरः. ५ संज्ञाविशेष एषः. ६ यस्य नाहरगढ इ. प्र. ७ नगरमध्यवर्णनान्ते. ८ प्रथमनिर्देश्यम्. ९ इयत्ताज्ञापकेषु. १० क्यारी इ. प्र. ११ धोरा इ. प्र. १२ गीतेश्चिरवेगत्वाच्छब्दमयी.

विकासवन्ति प्रतिभान्ति यस्य वापीषु सायाह्नि कैरवाणि ।
अन्तर्भृतादभ्रकुचत्सुगन्धात्प्रसह्य मन्ये दरितोदराणि ॥ ३६ ॥
पदे पदे वम्भ्रमणस्य दम्भाद्रथाङ्गवद्यत्र निकुञ्जवाताः ।
च्युतानधस्तादिव पुष्पगन्धान्स्वोदुह्यमानानुपसंहरन्ति ॥ ३७ ॥
एकस्य कस्याप्यहहादिमस्य परस्परं संभवदीर्ष्ययेव ।
प्रायेण यन्मण्डपवल्लरीणां सुमानि सर्वाणि समं स्फुटन्ति ॥ ३८ ॥
एकत्र वासादिव यत्र बाढं नानाविधायाः स्वसमानजातेः ।
विभाति वीथिर्हरितां नितान्तं पृथ्वीरुहाणां च तथा लतानाम् ॥ ३९ ॥
कुण्डान्तराले किल यत्र संततं वार्यन्त्रधारापतनोद्भविष्णवः ।
विष्वक्प्रकीर्णा इव पुष्पकुड्मला लसन्ति सायाह्नि नीरबुद्बुदाः ॥ ४० ॥
ईदृग्रूपस्तु मया नारामः क्वाऽपि वीक्षितो दृष्टा ।
यस्मिन्द्रुमकुसुमानां कुसुमत्वं त्वहह नास्त्येव ॥ ४१ ॥
दर्पणो वनदेव्येवं स्थापितो मुखमीक्षितुम् ।
उद्यानमध्ये तदिदं भाति स्थिरजलं सरः ॥ ४२ ॥

धारायन्त्रोद्गतजलकणाघट्टनत्रस्तचञ्च-
न्नानाचित्रस्फुटितकुसुमाकीर्णपक्षप्रतीकाः ।
कुञ्जे पश्य क्षणमित इतश्चाटुचुङ्कारयन्तो
न ज्ञायन्ते क्षणमिह हहा केचिदेते शकुन्ताः ॥ ४३ ॥
धारायन्त्रसमुत्पतिष्णुसलिलैराप्लावितं सर्वतः
स्तम्भं पश्य वयस्य शिल्पबहले कुण्डेऽत्र गौराश्मनः ।
उच्चैर्बद्धकपर्दमध्यनिपतद्भागीरथीस्नापितः
शम्भोर्देह इवाऽभिलग्नभसितः संभाव्यते यः सदा ॥ ४४ ॥

तत्राऽस्ति हर्म्यं क्षितिपस्य सुन्दरं नवं च लोकोत्तरकारुनिर्मिति ।
सत्यं समस्ता अपि चित्रिताः सुरा बभूवुरासेचनकं निरीक्ष्य यत् ॥ ४५ ॥

---

१ दरणं दरः स संजातो यस्य तदुदरम्. २ उन्नीयमानान्. ३ हरितत्वमानन्दादप्युपचर्यते. ४ कुत्सितसुमत्वम्. ५ उत्प्रेक्षाव्यञ्जकोऽयमिवशब्दः. ६ अस्य स्तम्भेन्वयः. ७ इदमप्युत्प्रेक्षासूचकम्.

[१]यस्यैकमालोक्य नवीनमन्दिरं विश्वेषु कर्मस्वपि विश्वकर्मणः ।
विशिष्य विश्वासमहं तु जातुचिद्व्रजामि नो विस्मयकारिधर्मणा ॥ ४६ ॥
यदुपर्युड्डयमानाः परितश्चिल्लाः क्वचित्क्वचित्समये ।
दिवि भान्तीव विमाना द्रष्टुमुपागच्छदमराणाम् ॥ ४७ ॥
आस्तां पार्श्वयुगोन्नतक्षितिधरव्यूहान्तरप्रोल्लस-
त्पाथःसंभृतकुण्डकूपललितोद्यानावलीसंवृते ।
अस्माकं तु भवत्पुरस्थरसिकप्रत्यग्रगोष्ठ्युत्सव-
प्रोद्गायद्वरवर्णिनीमुखरिते घाटे विहारः सदा ॥ ४८ ॥
[२]पीनाम्भोलीनमीनग्रहणरणरणन्मग्नकारण्डवाली-
प्रोल्लुण्ठत्कण्ठनालीक्षणसमयमिलन्नीलराजीललीलः ।
आलिङ्गत्तुङ्गभङ्गस्थितिभवदमितस्फीतसोपानभान-
भ्राम्यत्तीरस्थलोकः स्फुरति जयपुरे मानसाख्यस्तडागः ॥ ४९ ॥
[३]आकाशप्रतिमामृषाध्यवसितस्फेयस्तलप्रोच्चल-
त्कूर्मादिभ्रमवारणार्थविदितप्रोड्डीयमानप्लवः ।
वातान्दोलिततीरजाम्बवपृथुभ्रश्यत्फलोत्क्वाब्जिनी-
वारंवारगतागतालिकुतुकश्रीरेष पद्माकरः ॥ ५० ॥
लोके [४]दण्ड्यः स भवति मुहुर्योऽपराधं विधत्ते
चित्रं चित्रं बत जयपुरे नीतिरेषा न दृष्टा ।

---

१ यस्य राज्ञ उद्यानगतं नवीनमन्दिरमालोक्य विश्वकर्मणो विश्वेषु सर्वेषु कर्मसु अहं विस्मयकारिधर्मणा वैचित्र्यातिशयेन विस्मयकारित्वेन विश्वासं जातुचिद्विशिष्य न व्रजामीति सौधसौन्दर्यवर्णनप्रकारः. २ पीनाम्भोलीनमीनानां ग्रहणार्थं रणरणन्ती सती जातिवाशितं कुर्वती सती मग्ना या जलकाकपङ्क्तिस्तस्या जलान्तरेव प्रोल्लुण्ठन्ती कण्ठनाली तया क्षणसमयं यथा तथा मिलन्ती नीलजलसर्पलीला यत्र तथा आलिङ्गन्त आयान्तो ये तुङ्गा भङ्गास्तेषां स्थित्या भवत् अनन्तस्फीतसोपानभानं तेन भ्राम्यन् भ्रमं कुर्वन् तीरस्थलोको यत्र इति दीर्घः समासः. ३ आकाशप्रतिमया मृषा अध्यवसितं यत्स्फेयः तलं तत्र प्रोच्चलन्तो ये कूर्मादयस्तद्भ्रमवारणार्थं विदिताः प्रोड्डीयमानाः प्लवाः यत्र तथा वातेन आन्दोलितानि यानि तीरस्थजम्बूभवानि पृथूनि भ्रश्यन्ति फलानि तदुत्क्वाब्जिनीषु वारंवारगतागतालीनां कुतुकश्रीर्यत्र इति. ४ अर्थान्तरन्यासोपवलितेयं व्याजनिन्दा.

नित्यं गत्या नृपपथगतान्कुट्टिमान्खण्डयन्तो
दण्ड्यन्ते नो यदिह गणशः संप्रयान्तस्तुरङ्गाः ॥ ९१ ॥

पर्यास्तं[1] प्रतिपद्धति प्रतिगृहं दूरेऽन्तिकेऽपि क्वचि-
द्दीप्यद्भिर्[2]निशि दीपकैः शबलितं सर्वत्र यस्यां तमः ।
उद्यत्तारकसंहतिद्युतिमिलन्नीलोदरो[3]ल्लासितं
नीचैः प्रस्खलितं समस्तमिव खं साश्चर्यमालोच्यते ॥ ९२ ॥

सामीप्यं परिपोषयन्निव मिथो दूरस्थितोऽपि भ्रमा-
दाधारं व्यपलापयन्निव दृढस्तम्भाश्रितोऽपि स्फुटम् ।
द्रष्टृस्यश्च निबोधयन्निव परिच्छिन्नोऽपि मानच्युतिं
घण्टामार्गनिबद्धभूमिघटितो दीपव्रजः शोभते ॥ ९३ ॥

एतद्धन्यमितीव नाकपतिना रत्नानि वृष्टानि किं
सर्वत्राऽथ नृपप्रतापशिखिनः स्फूर्जन्ति वार्चींषि किम् ।
राज्यश्रीतटिनीप्रवाहसलिले किं बुद्बुदा इत्यमी
कुर्वन्ति भ्रमकल्पनां जयपुरे दीपावलीदीपकाः ॥ ९४ ॥

दुर्वर्णं[4] रजतं न चित्रमवद्गुर्ग्रीवान्त्यभागः पुन-
र्नो कश्चिन्निलयस्तथा च पटहो[5] भेरिर्न यस्यां बुधः ।
गुल्मिन्य[6]श्च लताः स्त्रियो न समितिः[7] संयत्न संपत्तथा
सर्पा एव च पन्नगा[8] न भृतका द्रुः पादपो[9] नो जनः ॥ ९५ ॥

आस्ते हिङ्गुल एव यत्र दरंदः[10] पुंसां न वेषः पुन-
र्निर्णीतः किल सप्ततन्त्वभिधया यज्ञः पुनर्नो पटः ।
दृष्टो वेश्मनि मूषकः पुनरधोगन्ता न कश्चिन्नरः
सिद्धान्तः[11] खलु शास्त्र एव न पुनः क्वाप्याश्रमे संश्रुतः ॥ ९६ ॥

---

१ पूर्णम्. २ ज्वलद्भिः. ३ उदरशब्देन मध्यं लक्ष्यम्. ४ कुत्सितवर्णम्. ५ पटं हन्तीति. ६ उदररोगयुताः. ७ मितिः प्रमाणं तत्सहिता. ८ पन्नं गलितं गच्छन्ति ते. ९ पादकरणकपानकर्ता. १० दरं भयं ददाति सः. ११ सिद्धानां साधुविशेषाणां अन्तः.

[1]अत्यन्तोन्नतभूधरस्थितबृहद्दुर्गस्थकूर्मान्वय-
क्षोणीनायकचक्रमस्तकमणेरग्रप्रदेशे स्थिता ।
वापीकूपतडागनिष्कुटवती या प्रांशुवप्रा पुरी
पूर्णा सर्वजनैर्विराजति निजा पुत्री यथाग्रे पितुः ॥ १७ ॥
[2]अस्य श्रीजयपत्तनस्य सकलक्ष्मालोकचूडामणेः
श्लाघैका महतीयमेव नितरामुत्कर्षसंदर्शिनी ।
आकाशोऽपि दिवा रवेर्निशि विधोर्बिम्बस्य विभ्राम्यतः
प्रच्छन्नेन मिषेण यस्य कुरुते नीराजनं नित्यशः ॥ १८ ॥
श्रीकुन्दननन्दनहरिवल्लभकविमल्लपल्लविते ।
जयनगरपञ्चरङ्गे काव्ये रङ्गस्तृतीयोऽगात् ॥ १९ ॥

---

## चतुर्थो रङ्गः ४

हे शार्ङ्गिन्नरि[3]पौरुषं कृतवता सत्कीर्तिराप्ता त्वया
सख्यौ तन्वि वितन्वता ननु रुषं कीर्तिः कुतः प्राप्यते ।
प्राप्तो भूरि न यज्ञतां त्वमधुना मैवं मया यज्ञता
प्राप्तैवेति रमां गिरा कुटिलया विष्णुर्जयन्नोऽवतु ॥ १ ॥
शैलाली[4] तव गोपुराग्रधरणौ नृत्यं विधत्ते सदा
श्रेणी सुभ्रु धराभृतां विदधती नृत्यं त्वयोक्ता कथम् ।
हास्यं नेति कुरु प्रभो ननु कथं वक्त्रं कृतं हा मया
पद्मां वक्रमिति ब्रुवन्दिशतु वः शक्रानुजः सत्क्रमम् ॥ २ ॥
अत्यागैः[5] क्रियते सदा बहुविधं विष्णो मदीयं त्वया
सत्यं भीरु विधीयते हि [6]भवदत्यागो मया नित्यदा ।
आश्चर्यान्वितमाददासि वचनं का तत्र चर्येक्षिता
संपृच्छन्कमलां त्रिविक्रम इति त्राणं विदध्यात्तव ॥ ३ ॥

---

१ एतेन पुर्या राज्ञः प्रचुरं वात्सल्यमायातं भवति. २ आकाशं जयनगरस्य सूर्य-चन्द्रविम्बाभ्यां नीराजनं करोतीत्युक्तेर्वैचित्र्य एव पर्यवसायः. ३ अरिपु पौरुषं. ४ शैलाली नटः. ५ अति आगोऽपराधः. ६ अत्र अक्षे अन्त्याच्चतुष्पटीगृहादग्रिमे गृहे धृते सति ज्ञता पाण्डित्यं ते मया ज्ञाता.

ज्ञाताऽन्त्याद्गृहतो धृतेऽग्रिमगृहेऽक्षे त्र ज्ञता ते मया
मिथ्यैतद्वदसि प्रिये ननु मम क्षेत्रज्ञतैवाऽस्ति यत् ।
श्लेषान्द्वेद्म्यहमीदृशान्न च तदा त्वं वेत्सि तान्कीदृशां-
ल्लक्ष्मीं मङ्क्षु विलक्षयन्निति मम स्तात्क्षान्तयेऽधोक्षजः ॥ ४ ॥

बद्धोऽस्त्येष मयाञ्जलिश्चिरतरं पद्मेऽनसूया भव
स्त्री जायेय कदाचनाऽपि न मुनेरत्रेरहं तु प्रिय ।
त्वष्टा त्वं भव भामिनी त्रिनयनस्त्री नाऽसि किं भाषसे
वाग्बन्धादिति ह्रेपितः कमलया शौरिर्मया स्मर्यते ॥ ५ ॥

शौरे के शपथास्त्वया प्रविहितास्तथ्याः प्रचक्ष्वाऽभव-
न्केशानां स्तुतयो मयाऽद्य विहिताः सन्त्येव सत्या इमाः ।
वाक्चेष्टा तव वर्तते बहुविधा सत्यं ममेष्टा च वाक्
पद्मामित्यनुमोदयन्विदलताद्गूश्छद्म पद्मापतिः ॥ ६ ॥

प्रणम्य वाणीं जयपत्तनीयनृपान्वयप्राक्तनपार्थिवानाम् ।
सिंहासनारोहणराज्यकृत्योर्विलिख्यते सामयिकं प्रमाणम् ॥ ७ ॥

बभूव राजा नृवराख्ययादौ यो वासयामास पुरीं[2] स्वनाम्ना ।
तस्येश्वरीसिंह इति प्रसिद्धो वार्धक्यकालेऽजनि सूनुरेकः ॥ ८ ॥

## ( ९३३ ) श्रीसोढदेवमहाराजानाम् ( ४० )

[3]श्रीसोढदेवोऽस्य सुतो मनस्वी गुणाग्निनन्दोन्मितविक्रमाब्दे ।
द्योसापुरे निर्जितचौहमानो व्योमाब्धिवर्षाणि चकार राज्यम् ॥ ९ ॥

## ( ९७३ ) श्रीदुर्लभरायमहाराजानाम् ( ३३ )

श्रीमाँस्ततो दुर्लभरायनामा भूपस्त्रिसप्तग्रहहायनेऽभूत् ।
यो रामदुर्गाह्वपुरे स्वराज्यमब्दाँस्त्रयस्त्रिंशतमाबभार ॥ १० ॥

---

१ वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः श्लिष्यन्ति शब्दाः श्लेषोसाविति लक्षणलक्षितशब्दानां भिन्नस्वरूपापह्नवान्. २ नरवर इ. प्र. ३ एतत्पूर्वकालनिर्णयो मया न लब्धः. ४ चोहबाणक्षत्रिय. ५ यस्य रामगढ इति प्रसिद्धिस्तत्रापि राजप्रासादाः सन्ति संप्रति वर्तमानमहाराजाः प्रायो मृगयार्थं तत्रैव सराज्ञीका विहरन्ते.

( १००६ ) **श्रीकाकिलदेवमहाराजानाम्** ( १४॥ )

शास्त्राभ्रशून्येन्दुमितेऽथ वर्षे तदात्मजः काकिलदेवभूपः ।
सामन्तमेकं विनिहत्य दम्भादम्बावतीं तन्नगरीं जहार ॥ ११ ॥
वरप्रदानाज्जमवायदेव्या[2] जित्वा सपत्नान्निकटे तटिन्याः ।
बाणोद्भवाया अथ तत्र पुर्यां राज्यं व्यधात्सार्धचतुर्दशाब्दान् ॥ १२ ॥

( १०२१ ) **श्रीहनूदेवमहाराजानाम्** ( ३१ )

एकद्विखेन्दून्मितहायनेऽभूद्भूपो हनूदेव इति प्रतापी ।
पृथ्वीगुणाब्दान्हतसर्वशत्रुः पितुः पदं यो बिभरांचकार ॥ १३ ॥

( १०५२ ) **श्रीजाह्नवदेवमहाराजानाम्** ( २७ )

श्रीजाह्नवोऽजायत भूमिजानिः संवत्सरे नेत्रशराम्बरेन्दौ ।
निरर्गलं राज्यधुरां दधार वर्षाणि सप्ताधिकविंशतिं यः ॥ १४ ॥

( १०७९ ) **श्रीयजनदेवमहाराजानाम्** ( ३४ )

नन्दर्षिखेन्दुप्रमिते नृपोऽभूत्तदात्मजोऽब्दे यजनाभिधानः ।
यः पालयामास विनिर्जितारिः प्रजा निजा वेदगुणाब्दमानम् ॥ १५ ॥

( १११३ ) **श्रीमलयसिंहमहाराजानाम्** ( ५२ )

रामेन्दुभूचन्द्रमितेऽथ वर्षे राजाऽभवच्छ्रीमलयादिसिंहः ।
यो भैरवोन्मोचितदारदोषश्चकार राज्यं नयनाशुगाब्दम् ॥ १६ ॥

( ११६५ ) **श्रीमदुज्ज्वलदेवमहाराजानाम्** ( ३३ )

संजातवानुज्ज्वलदेवदेवः संवत्सरे बाणरसेन्दुचन्द्रे ।
निराकुलं पैतृकविष्टरं यस्तत्रे समा रामगुणप्रमाणाः ॥ १७ ॥

( ११९८ ) **श्रीराजदेवमहाराजानाम्** ( ३७ )

श्रीराजदेवोऽथ तदीयसूनुर्मातङ्गनन्देन्दुसुधांशुवर्षे ।
राज्येऽभिषिक्तः प्रकृतीः पुपोष त्रिंशत्समाः सप्त च नीतिवेत्ता ॥ १८ ॥

---

१ संज्ञानामेदम्. २ अम्बावत्यां पूर्वं कश्चिद्भैरवस्तत्रत्यराजवधूविवाहानन्तरं प्राक्स्वयमुपभुङ्क्ते स्म तमेष राजा निजग्राहेति कथा वर्तते.

( १२३५ ) श्रीकीलनसिंहमहाराजानाम् ( ५९ )

बाणाग्निनेत्रेन्दुमिते ततश्च वर्षेऽभवत्कीलनसिंहभूपः ।
राज्यश्रियं प्राज्यकृताज्यहोमो निधीषुवर्षाणि स संदधार ॥ १९ ॥

( १२९४ ) श्रीकुन्तलदेवमहाराजानाम् ( ४१ )

जज्ञे पुनः कुन्तलसिंहनामा वर्षे पयोराशिनवाक्षिचन्द्रे ।
वसुन्धरेशो विधुवेदसंवत्सरान्तमानन्दितवाँश्च पौरान् ॥ २० ॥

( १३३५ ) श्रीजवनसिंहमहाराजानाम् ( ४९ )

उत्पन्नवाञ्छ्रीजवनादिसिंहः शराग्निरामेन्दुमितेऽथ वर्षे ।
महीपतिर्लोकमपालयच्च यो मध्यमं नन्दयुगाब्दमानम् ॥ २१ ॥

( १३८४ ) श्रीमदुदयकर्णमहाराजानाम् ( २२ )

तत्सूनुरासीदुदयादिकर्णः समुद्रवस्वग्निनिशाधिपाब्दे ।
उत्पाद्य पुत्रान्स गुणप्रमाणान्द्वाविंशतिं राज्यसमाः समाप ॥ २२ ॥

( १४०६ ) श्रीनरसिंहदेवमहाराजानाम् ( ४४ )

रसाभ्रवेदेन्दुशरद्यधत्त पट्टाभिषेकं नरसिंहदेवः ।
सरस्वदाम्नायमिते च वर्षे प्रशासितुं देवपुरीं प्रतस्थे ॥ २३ ॥

( १४५० ) श्रीवनवीरसिंहमहाराजानाम् ( २२ )

भूयो नृपः श्रीवनवीरसिंहः खबाणसिन्धुक्षितिवत्सरेऽभूत् ।
दृग्रोदसीसंमितहायनानि राज्यं विधायापरलोकमभ्यैत्[1] ॥ २४ ॥

( १४७२ ) श्रीमदुद्धरणमहाराजानाम् ( २३ )

अथो द्विशैलाम्बुधिभूसमायां राजा बभूवोद्धरणाभिधानः ।
आरामदृग्वत्सरमाधिपत्यं द्विजातिभाजा समधारि येन ॥ २५ ॥

( १४९५ ) श्रीचन्द्रसेनमहाराजानाम् ( ३८ )

पृषत्कनन्दाब्धिधराख्यवर्षे श्रीचन्द्रसेनोऽथ बभूव भूपः ।
प्रतापशाली द्विरदानलाब्दमर्यादमाशिश्रियदात्मसत्ताम् ॥ २६ ॥

---

१ मृत्युलोकम्

( १५३३ ) श्रीपृथ्वीराजमहाराजानाम् ( २५ )

त्रिरामबाणावनिनाम्नि पृथ्वीराजाख्यराजोऽजनि वत्सरेऽथ ।
पीठे पितुर्हस्तिधरातनूजः स बाणनेत्राब्दमधिष्ठितोऽभूत् ॥ २७ ॥

( १५५८ ) श्रीपूर्णमल्लमहाराजानाम् ( १६ )

श्रीपूर्णमल्लो नृपतिर्बभूव वस्वाशुगेषुक्षितिहायनेऽथ ।
आषोडशाब्दं स विधाय राज्यं यथा तथा प्राप कथावशेषम् ॥ २८ ॥

( १५७४ ) श्रीभीमसिंहमहाराजानाम् ( ८ )

वेदर्षिबाणेन्दुमिते ततोब्दे भीमाभिधोऽजायत भूमिभर्त्ता ।
वोढाष्टवर्षावधिराज्यभारश्चकार यश्चङ्क्रमणं द्युलोके ॥ २९ ॥

( १५८२ ) श्रीरत्नसिंहमहाराजानाम् ( २२ )

नृपोऽभवत्तत्तनयोऽथ रत्नसिंहो दृगष्टाशुगभूमिवर्षे ।
आनेत्रहस्ताब्दमवाप्य राज्यमायुःप्रमाणं बत निर्णिनाय ॥ ३० ॥

( १६०४ ) श्रीमदाशाकर्णमहाराजानाम् ( ० )

पुनश्च जातो धरणीभृदाशाकर्णोऽर्णवव्योमरसेन्दुवर्षे ।
रोगेण केनाऽपि स मासमात्रे संत्यक्तवान्संहननं स्वकीयम् ॥ ३१ ॥

( १६०४ ) श्रीभारमल्लमहाराजानाम् ( २६ )

श्रीभारमल्लोऽुदधे नृपत्वं श्रुत्यभ्रशास्त्रक्षितिसंमितेऽब्दे ।
षड्विंशतिं राज्यमसौ विधाय वर्षाणि नाकाभिमुखो बभूव ॥ ३२ ॥

( १६३० ) श्रीभगवद्दासमहाराजानाम् ( १६ )

भूपो बभूवान्भगवत्पदादिदासो वियद्वह्निरसक्षमाब्दे ।
आषोडशाब्दं यवनेशशिष्या काश्मीरगन्ता स चकार राज्यम् ॥ ३३ ॥

( १६४६ ) श्रीमन्मानसिंहमहाराजानाम् ( २४ )

रसाब्धिशास्त्रामृतरश्मिवर्षे विख्तोऽथ राजाऽजनि मानसिंहः ।
स म्लेच्छभूपध्वजिनीप्रशास्ता वेदाक्षिवर्षं जयति स्म वीरः ॥ ३४ ॥

---

१ बादशाह इ. प्र.

( १६७० ) श्रीभावसिंहमहाराजानाम् ( ६ )

व्योमर्षिशास्त्रेन्दुशरद्यभूद्राट् तज्ज्येष्ठपुत्रोऽथ च भावसिंहः ।
चम्वां स मिर्जोपपदं शकेन्द्रादवाप्य चक्रे च षडब्दराज्यम् ॥ ३५ ॥

( १६७६ ) श्रीमिर्जाजयसिंहमहाराजानाम् ( ४० )

रसर्षिशास्त्रद्विजराजवर्षे मिर्जानृपोऽभूज्जयसिंहनामा ।
श्रीसेवकाख्यप्रतिभूपजेता जिजीव योऽभ्रश्रुतिसंवदन्तम् ॥ ३६ ॥

( १७१६ ) श्रीविष्णुसिंहमहाराजानाम् ( १८ )

पट्टाभिषिक्तोऽजनि विष्णुसिंहस्ततो रसाभ्रर्षिरसाख्यवर्षे ।
अष्टादशाब्दावधि शान्तकष्टं यो म्लेच्छराजं पुरु संवभाज ॥ ३७ ॥

( १७५४ ) श्रीसवाईजयसिंहमहाराजानाम् ( ४७ )

जज्ञे पुनः श्रीजयसिंहराजः समुद्रनाराचमुनिक्ष्माब्दे ।
प्रागल्भ्यतुष्टाद्यवनेश्वराद्यो लेभे सवायीति पदं प्रशस्तम् ॥ ३८ ॥
अवासयद्यो जयपत्तनं च प्रागश्वमेधं सवनं विधाय ।
देशान्तरेभ्योऽह्वत लब्धवर्णान्विप्रान्सिषेवेऽधिकजीविकाभिः ॥ ३९ ॥
तत्तत्सदाचारकृतीः प्रचख्यौ नानानिवन्धान्निरमीमपच्च ।
सर्वेष्ववर्त्तिष्ट यथावदित्थं चक्रे स राज्यं मुनिवर्णवर्षम् ॥ ४० ॥

( १८०१ ) श्रीमदीश्वरीसिंहमहाराजानाम् ( ७ )

अथेश्वरीसिंह इति स जातः पृथ्वीपतिः क्ष्माखवसुक्षमाब्दे ।
आसप्तवर्षं नृपतां वलम्ब्य भ्रातुर्भयाद्योऽभ्यगमत्कुमृत्युम् ॥ ४१ ॥

( १८०८ ) श्रीमाधवसिंहमहाराजानाम् ( १७ )

तदन्वभून्माधवसिंहभूपो वर्षे वसुव्योमकरिक्षमाख्ये ।
राज्यश्रियं संश्रितवान् प्रगल्भः स्वैरं स शैलेन्दुसमं बलिष्ठः ॥ ४२ ॥

---

१ अत्र विंशतिवर्षाणि यद्वर्धन्ते तन्निर्णयं नो विद्मः लोकास्तु कृष्णसिंहाख्यो राजा मध्येऽजनीतिवदन्ति एवमग्रेपि रामसिंहनिश्चये वर्षत्रयं वर्धते तस्यापि. २ जयसिंहकल्पद्रुमप्रभृतीन्. ३ आत्मात्मघातम्. ४ एतैः सवाई माधोपुर इति स्वकीर्त्तये पुरमप्येकमिह वासितं तज्जयपुराच्चत्वारिंशत्क्रोशमितं दूरमस्ति तत्र रणतभंवर इति प्रसिद्धो गणेशस्य दुर्गश्रेष्ठोऽस्ति.

( १८२५ ) **श्रीपृथ्वीसिंहमहाराजानाम्** ( ९ )

कुन्त्यात्मजद्विद्विपभूमितेऽब्दे पृथ्व्यादिसिंहो नृपतिर्बभूव ।
नवाब्दपर्यन्तमनात्मजो यश्चकार राज्यं मृगयानुरागी ॥ ४३ ॥

( १८३४ ) **श्रीप्रतापसिंहमहाराजानाम्** ( २४ )

चतुस्त्रिहस्तिक्षितिहायनेऽनु प्रतापसिंहः कविमौलिरत्नम् ।
श्रीताम्रवक्त्राधिपमानकारी चतुर्द्विवर्षाणि बुभोज राज्यम् ॥ ४४ ॥

( १८५८ ) **श्रीजगत्सिंहमहाराजानाम्** ( १९ )

नागाशुगाष्टक्षितिवत्सरेऽभूद्राजा जगत्सिंह इति व्यवायी ।
राज्यं स भूतावनिवर्षमानं प्रमत्तचित्तः सततं बभार ॥ ४९ ॥

( १८७२ ) **श्रीजयसिंहमहाराजानाम्** ( १४ )

लोकर्षिनागावनिसंमितेऽब्दे जज्ञे नृपोऽन्वग्जयसिंहनामा ।
चतुर्दशाब्दावधि बालपुत्रः कार्यं प्रजानामुररीचकार ॥ ४६ ॥

( १८९० ) **श्रीरामसिंहमहाराजानाम्** ( ४६ )

अभ्रग्रहाष्टेन्दुशरद्यवाप श्रीरामसिंहः शिशुरेव राज्यम् ।
आशाब्धवेदाब्दमनौरसो यश्चकार राज्यं मतिमत्तमाग्र्यः ॥ ४७ ॥

( १९३७ ) **श्रीमन्माधवसिंहमहाराजाः**

सप्तत्रिनन्दक्षितिनाम्नि वर्षे राज्यं भजन्माधवसिंहसिंहः ।
सौभाग्यशाली महिषीप्रियो[6]ऽयं वर्वर्तु नित्यं मधु[7]भित्प्रसादात् ॥ ४८ ॥

ज्ञेया तस्कररौहिषाश्चपलता संप्रत्यसौ मृत्यवे
प्रत्यर्थिद्विरदाः पुनर्न भवतां क्षेमाय बृंहारवाः ।

---

१ अस्य राज्ञो व्रजभाषायां परःशताः कृतयोऽत्र समुपलभ्यन्ते. २ अंग्रेज सरकार इ. प्र. ३ दीर्घसूत्रोयमभूत्स्त्रीतन्त्रे. ४ अत्यन्तबुद्धिमानित्यर्थः. तत्तासूचकविशेप एव जी. सी. एस्. आई. इत्युपाधिरप्यस्य फिरङ्गैरार्पितः. ५ द्वितीयसिंहशब्दः श्रेष्ठार्थकः. ६ राज्ञीनां प्रियः. ७ कैश्चिदेकैः श्रीब्रह्मचारिभिर्गुरुभूतैरनुग्रहेण विश्राणितोयं श्रीगोपालाख्यया मधुभिद्भगवान् मूर्तिधारी राधाराधितः श्रीकृष्णः स एते राजभिर्निजसौधोपान्त एव विराजितः पोपूज्यते.

रे कर्णेजपभल्लुकाः समुचितं नेदं वृथावल्गनम्
यस्मान्माधवसिंह एष भजते स्वाभाविकोज्जृम्भणम् ॥ ४९ ॥
ईला[1]श्रितोप्यस्त्यनिलाश्रितो यस्तथा बलाढ्योप्यबलाढ्य एषः ।
अनङ्गरागोऽपि नवाङ्गरागः श्रीमान्नृपो माधवसिंहवर्मा ॥ ५० ॥
श्रीगोपालपदाम्भोजभ्रमरीभूतमानसः ।
आशीर्भिः कविमल्लस्य क्रियाद्राज्यमसौ चिरम् ॥ ५१ ॥
श्रीकुन्दननन्दनहरिवल्लभकविमल्लपल्लविते ।
जयनगरपञ्चरङ्गे काव्ये रङ्गश्चतुर्थोऽगात् ॥ ५२ ॥

---

द्विषां गणो रणे येन वीराग्र्येण समुद्धृतः[2] ।
खड्गाग्रेण गलाग्रे द्राक्करग्राहं समुद्धतः ॥ १ ॥

---

## पञ्चमो रङ्गः ५

श्रीमाधवो नरपतिर्भगवत्कृपाद-
क्संप्राप्तसर्वविभवो जयपत्तनस्य ।
ध्यात्वा गुरुं सपदि गुर्जरनिर्जरेण[3]
प्रस्तूयते सुकविना हरिवल्लभेन ॥ १ ॥
श्रीराधिकारमणपूर्णकृपैकपात्रं
पादोत्तरस्वपदवीधरणप्रसिद्धः ।
राजावर्ताभिधनरेन्द्रगणाग्रगण्यः
श्रीमानयं जयति माधवसिंहदेवः ॥ २ ॥
वश्यान्करोति विशदा[6]न्महिषीश्च चित्रा[7]-
र्रक्ता[8]न्मनीषिनिचयान्हरित[9]ः प्रजाश्च ।
नीलीकरोति[10] च रिपून्सुहृदोऽथ पीता[11]-
न्यः सर्वरञ्जनकृताविति कोप्यपूर्वः ॥ ३ ॥

---

१ इलायां भुवि लोकैराश्रितः. २ समुत्-हत-इति छेदोऽत्र. ३ द्रविडपञ्चकान्तर्गतगुर्जरजातीयविप्रेण. ४ सवायीतिप्र. ५ कश्चिच्छ्रेष्ठः क्षत्रियप्रभेदः. ६ स्वच्छान् श्वेतांश्च. ७ गुणविस्मिताः कर्बुरिताश्च. ८ अनुरक्तान् शोणांश्च. ९ उपचारेण मुदिता हरिद्वर्णाश्च. १० उदस्तान् करोति कृष्णवर्णांश्च. ११ सादरमवलोकितान्पीतवर्णांश्च.

दृष्ट्वैव यं निजजनोऽध्यव[1]सायपूर्ण-
स्तूर्णं तथा परजनः परिभूतभूतिः ।
सार्थोऽर्थिनां विगलिताखिलचित्तचिन्तः
किं चाधिकं गुणिजनो भवति प्रसन्नः ॥ ४ ॥

ऊर्ध्वं विहायसि हिमद्युतितारकात्वं
नीचैस्तथा भुजगभर्त्तरि कञ्चुकत्वम् ।
पार्श्वद्वये सलिलराशिषु मौक्तिकत्वं
विष्वग्यता बत दधे यशसैवे[2] यस्य ॥ ५ ॥

यस्य प्रतापदहनाऽसहनो दवीया[3]-
न्क्षिप्रं लभेत तर्प[4]नोपि स मुर्मुरत्वम्[5] ।
अश्रान्तशीतलसमुच्छलदूर्मिवृन्दा
मन्दाकिनी यदि भवेन्नहि संनिकृष्टा ॥ ६ ॥

यज्जैत्रयानपृथुतोपरवश्रवेण
संत्रस्य तल्पतलतः स्खलितोम्बुराशौ ।
मत्स्यावतारसमये परिशीलितं स
कृष्णः स्वकीयतरणं पुरु संस्तवी[6]ति ॥ ७ ॥

अर्चिर्विलोलरसनः परिमुक्तकोश-
निर्मोकक: कृतनितान्तभयः परेषाम् ।
स्पष्टं व्यनक्ति धृतपानविषो यदीयं
दोर्वर्तिखड्गभुजगश्च नरेन्द्रभावम् ॥ ८ ॥
स्वात्यन्तदूरसमुपागतिजश्रमस्य
प्रोत्तारणाय विजयश्रिय आश्रयन्ति ।

---

१ उत्साहः. २ यद्यशोरूपाण्येव चन्द्रादीनि सर्वाणीति भावः. ३ अतएव अतिदूरः. ४ स्वयंतपतीत्येवम्भूतोऽपि. ५ ज्वालाखिन्नत्वम्. ६ अन्यथाऽद्य मयि मज्जिते महाननर्थोऽजनिष्यत इति. ७ अत्र यत्करगतः खड्गरूपो भुजगो राज्ञो नरेन्द्रत्वं जाङ्गुलिकत्वं च व्यनक्ति तदर्थमर्चिरादीनां रसनादिभिः समं वोद्धव्योऽभेदः. ८ निरसनाय.

संलग्नचन्दननवास्तरणातिरम्यं
यस्योल्लसद्बृहदुरःस्थलतुङ्गतल्पम् ॥ ९ ॥
नीचैर्दिवः पुनरुपर्यवनेर्वसन्तः
के सन्ति मर्त्यपतयोऽत्र विचेतसस्ते ।
पातालनाकविषयेप्यनिवर्त्तमानां
यच्छासनां परिहरन्ति हि ये कुभाग्याः ॥ १० ॥
[1]तान्खर्वशङ्खमकरायुतकच्छपादि-
विख्यातिमन्नवनिधीँस्तु कुबेरकोशान् ।
यस्याशु संत्रपयते सर एव तादृ-
ग्वृत्तं तदा किमिव कोशकदम्बकानाम् ॥ ११ ॥
स्याद्यस्य कस्यचन शास्त्रसमाप्तिसंवि-
त्किं चेश्वराभिलषितस्थितिनिश्चयोऽपि ।
सिद्धान्तधीरथ कविप्रतिभावधीनां
शक्तः स एव भुवि यद्विभवं प्रवक्तुम्[2] ॥ १२ ॥
हा नोऽन्तिकेऽद्य निवसन्ति[3] पुरात्र के के
साक्रन्दमित्यभिहिता गृहदेवताभिः ।
त्रासेन यस्य रिपवो वनयानकाले
पश्यन्ति[4] केवलमुदश्रु मुहूर्तमात्रम् ॥ १३ ॥
अत्यर्थमात्महृदयेऽनुभवन्यदीयं
संग्रामशौर्यचरितं स यदाहिराजः ।
रोमाञ्चमेति सकलोपघनेष्वकस्मा-[5]
ज्जाने तदा प्रभवति क्षितिकम्प एषः ॥ १४ ॥

---

१ ह्रस्वा ये शम्बूकास्तथा मकरा उपचारेणानन्ता ये कच्छपादयः कमठादय इति तद्विशिष्टं तु सर एव तथा तान्येतानि निधिविशेषनामान्यपि. २ शास्त्रसमाप्त्यादीनामनिश्चये यद्विभवस्याप्यपरिच्छेद इति भावः. ३ पुरायोगे निवत्स्यन्तीतिकृत्वा व्याख्येयम्. ४ वैरिविध्वस्यमाना असमर्थाः पलायनमन्तरा वयं किं नाम कुर्याम इत्यर्थः. ५ सर्वेष्वङ्गेषु.

तप्तान्स्वकाँस्तु परिशीतलयन्नितान्तं
शीतान्पराँश्च किल तापयदञ्जसैव ।
एवं विचित्रनिजवृत्तिविचेष्टमानं
तेजः सदा किमपि वर्षति यस्य वक्त्रे ॥ १५ ॥

यः स्वप्रजां शुभमतिः किल जीविकानां
दानैस्तथाऽभ्युपगमैर्विविधैः कराणाम् ।
प्रावृण्निदाघसमये पयसां प्रवृष्ट्या
कृष्ट्या रविर्भुवमिव प्रबिभर्ति नित्यम् ॥ १६ ॥

निर्विघ्नमेष खलु पालयितुं समस्ताँ-
ल्लोकान्क्षमोऽस्ति नृपतिः प्रसरत्प्रतापः ।
स्मृत्वेति किं मनसि माधवसिंहदेवं
विश्वम्भरेण सुचिरं परिसुप्यतेऽब्धौ ॥ १७ ॥

आलम्ब्य यः सचिवपाणितलं स्वपीठा-
दुच्चैर्भवन्प्रचुरशक्तियुतोऽपि नूनम् ।
विश्रान्तदेह इव कामपि सर्वलोक-
धूर्धारणेन सुचिरं समुपैति शोभाम् ॥ १८ ॥

मुण्डानि वैरिनिकरस्य निजीय-
खड्गधाराम्भसां बहलगौरवभाजि पूरे ।
पाण्यब्जसंदितरणद्रणकङ्कणेन
संतारितानि सुचिरं कुतुकेन येन ॥ १९ ॥

अत्युच्चगोपुरशिरस्स्थगृहत्रिसंध्यँ-
संताड्यमात्रविपुलोदरशालिभेर्यैः ।

---

१ विवक्षया प्रकटतीत्यर्थकोयमकर्मकः. २ मासूल इ० प्र०. ३ रविर्हि प्रावृषि पयांसि वर्षति निदाघे च शोषयतीति पौराणिकाः. ४ विष्णुना शरदि समुद्रे मासचतुष्टयावधि योगनिद्रया सुप्यते प्रसिद्धमिदं पुराणेषु. ५ राजरीतिरेषा तत्रेयमुत्प्रेक्षा. ६ शिरोभत्र उच्च इति यावत्. ७ तिसृणां संध्यानां समाहारस्त्रिसंध्यम्.

यद्धर्मकर्मकृतितुष्टसुपर्वनर्दि-
भेरीभ्रमं प्रतिदिशं परिबिभ्रतेऽभ्रे ॥ २० ॥

पक्षे[1] निजे प्रचलतामपि योऽन्तरङ्गः
शोभां दधाति खलु चित्रमनन्तरङ्गः ।
कृत्यज्ञ इत्यपि च योऽखिलपौरवर्गैः
संकीर्त्यतेऽहह तथापि परं कृतिज्ञः ॥ २१ ॥

यः[2] प्रस्फुटं दधदपि द्वितयं पदस्य
पौरेष्वनेकपद इत्यभितः प्रसिद्धः ।
दोषावुभौ किल समाकलयन्महान्तौ
निर्दोष इत्यहह नित्यमुदीक्ष्यते यः ॥ २२ ॥

आलक्षितो[6]ऽपि नितरामवरोधनैर्य-
श्चित्रं चकास्ति वर एव धनैस्तथापि ।
आभाति यस्य च यथा किल सिन्धुरोध-
स्स्थेष्टस्तथैव हह कीर्तिकदम्बकोऽपि ॥ २३ ॥

या बोभ[3]वत्प्रतिगृहोत्सववादिनाना-
वादित्रघोषमुखरायितरोदसीका[4] ।
तां मेखलायित[5]बृहद्बृहदद्रिचक्रां
स्वां भूरि निर्विशति यो नगरीं समृद्धाम् ॥ २४ ॥

पर्याप्य भूमिवलयं सकलं क्रमेण
यत्स्वच्छकीर्त्तय इवाम्बरमाश्रयन्त्यः ।

---

१ अन्तरङ्ग आत्मीयः। अनन्ता रङ्गा यस्य । कृत्यं जानातीति कृतेरज्ञश्चेतिविरोधः. २ अनेके पदो यस्येति विरोधः अनेकपान्हस्तिनो दत्त इति तत्परिहरणम् तथा दोषो ऽपगुणौ पाणी च. ३ अतिशयेन भवन्. ४ रोदसी द्यावाभूमी. ५ एकपार्श्वं विहाय सर्वतोऽस्याः पुर्याः सन्ति महान्तः पर्वता एतेन दुर्धर्षा सेति सूचितम्. ६ अवरोधनै-र्निशान्तैरालक्षितस्तथा धनैरवरइत्यालक्षितोपि धनैर्वरएवेति निशान्तार्थेनैव विरोधप-रिहारस्तथा यस्य सिन्धुरो हस्ती यथाऽधःस्थेष्टस्तथा यशोविशेषोपि सिन्धुरोधसि समुद्र-प्रतीरे स्थेष्टः सन्नाभाति ।

कासारवृन्दतटतो बिसकण्ठिकानां
प्रोड्डीय यान्त्य उपरि प्रतिभान्ति वीथ्यः ॥ २५ ॥
उद्यन्नयं सुचिरमस्तु सुधागभस्ति-
रास्तां च केसरियुवैष सदा प्रगर्जन् ।
दृष्टिप्रसादकृदसौ सवपुः सरोऽस्तु
यं मागधा मुहुरिति ब्रुवते निरीक्ष्य ॥ २६ ॥
सामान्यमेव यदि भो वसुमत्यधीशं
संमन्यसे कवनकारिषु यं वदान्यम् ।
[1]तन्मे त्वमेकमपि चारु विचार्य तेन
सब्रह्मचारिणमिहाधिधरं वदाऽन्यम् ॥ २७ ॥
येनाध्वना चलति यत्पृतना नगर्यां
नासीरतारतरसान्द्रनदन्मृदङ्गाः ।
नादानुसारधरणिप्रपतिष्णुपादाः
प्रायो भटा इव भवन्ति नरास्तदीयाः ॥ २८ ॥
पर्याविलीकृतनभस्तटिनीपयाँसि
यत्सैन्यसैन्धवे[2]खुरप्रसरद्रजांसि ।
शीघ्रं जवाद्विघटयन्ति समित्यमर्षा-
क्रान्तारिबालविधवानयनाम्बुवर्षाः ॥ २९ ॥
स्निग्धच्छटापटलविच्छुरितः सुवृत्तः
प्रोद्दामसंमदवशंवदसर्वनेत्रः ।
ढुण्ढारभूनववधूपृथुभालबिम्ब-
सिन्दूरसान्द्रतिलकश्रियमश्नुते यः ॥ ३० ॥
[3]क्रुध्यद्विरोधिनृशिरोधिविकृत्तिकाल-
संलग्नबन्धनसमुज्झितवक्त्रकेश्यम् ।

---

१ त्वं चारु विचार्य इह अधिधरं तेन राज्ञा सदृशमेकमपि मह्यमन्यं वदेति योजना. २ सैन्धवा अश्वाः. ३ क्रुध्यतां विरोधिनृणां शिरोधीनां कर्त्तनकाले संलग्नं व-

विष्वक्तरङ्गततिदन्तुरयत्कृपाण-
पानीयकप्रचलशैवलतामुपैति ॥ ३१ ॥

क्षिप्रं क्षणक्षपितपक्षविपक्षलक्ष-
वक्षस्स्थलक्षयपतत्क्षतजैररूक्षान् ।
मध्येमृधं चकितगन्धगजेन्द्रशुण्डा-
वार्भिर्नि[1]र्नेजति यदीयभटाः स्वकुन्तान् ॥ ३२ ॥

यद्वीरपा[2]नविलसद्बलतूर्यशब्दा
नो केवलं प्रियतमैः परिपन्थिभीरूः ।
किन्त्वादितेयपतिनाप्सरसः समस्ता-
स्तं नारदं मुरजिता च वियोजयन्ति ॥ ३३ ॥

क्ष्वेडारवैः क्षितिपतिर्य उदग्रवेगैः
कर्णान् करोति बधिरान्युधि शात्रवाणाम् ।
स्वस्यापि किंच बधिरौ विदधाति कर्णा-
वभ्यर्णवर्त्ति कविपुङ्गवसूक्तघोषैः ॥ ३४ ॥

स्तोकानुयायिपलध्वं[3]सरसारमेया
वल्गाविनिघ्नमुखयन्मृगयातुरङ्गाः ।
प्रासान्पथि प्रविकटानवटा[4]नटव्या
नेत्रैः समं विमिषतां द्रुतमुत्प्लवन्ते ॥ ३५ ॥

एकाकिनं प्रखरदंष्ट्रमुखातिघोरं
सिंहं समीक्ष्य विपिने मृगमागतो यः ।
शस्त्रान्वितो विदितधर्मसमी[5]करीतिः
स्वोपि प्रहर्तुमभियात्यसहाय एव ॥ ३६ ॥

---

न्धन ढाठा इ. प्र. तत्समुज्झितं मुखकेश डाढी इ. प्र. तद्वृन्दं यत्कृपाणपानीयके प्रच-लशैवलतामेतीत्यर्थः.

१ प्रक्षालयन्ति. २ रणारम्भे भटैः संभूय यन्मिथो मद्यं पीयते तद्वीरपानवाच्यम् । ३ मांसादनाः शिकारी कुत्ता इ. प्र. ४ गर्त्तान्. ५ समीकं युद्धं.

दंष्ट्राभिघातिकरचालितवह्नियन्त्र-
निर्यद्गुटीवलयसंज्वलिताग्नितापैः ।
संमूर्छितान्किटिगणान्द्रवतः पुरस्ता-
त्कृत्वा हिनस्ति बहुचित्रवधं वने यः ॥ ३७ ॥

बृंहारवान्विशिखपङ्क्तिनिखन्यमान-
गण्डस्थलीव्यथितकाननकुञ्जराणाम् ।
श्रुत्वा समुज्जितगुहा धुरि यस्य सिंहाः
क्षिप्रं विनैव यतनं प्रकटीभवन्ति ॥ ३८ ॥

प्रासा यदेणकिरिकेसरिशृङ्गदंष्ट्रा-
शश्वत्प्रपातवशतोऽतिशिता बभूवुः ।
बाढं विधाय मृगयामिदमेकमेव
लब्धं फलं वसुमतीदयितेन येन ॥ ३९ ॥

यः कोपि भूमिपतिरस्ति न किन्तु सिंहो
दुर्गाणि हन्त नच तस्य हि गह्वराणि ।
तत्रारिकोशनिचिता ननु पद्मरागाः
किन्त्वाहतद्विरदलोहितलिप्तमुक्ताः ॥ ४० ॥

द्वार्द्वार्बृहद्बृहदुपस्थितवह्नियन्त्रा
नानास्त्रशस्त्रपरिशीलनदृप्तसैन्याः ।
दुर्गावलीः शिखरिमूर्द्धसु यस्य वीक्ष्य
केषां द्विषां न हि रुजन्ति चिरं शिरांसि ॥ ४१ ॥

शश्वच्चलाचलबलाश्वखुरस्थलोहै-
खण्डोपलाभिहननोत्थशुचिस्फुलिङ्गाः ।
कुर्वन्ति यच्छिखरिदुर्गपथेषु पार्श्व-
प्रांशुद्रुपङ्क्तिपिहितेषु परं प्रकाशान् ॥ ४२ ॥

दुर्धर्पतानिबिडितानि यदीयदुर्गा-
ण्युच्चोच्चसौधशिखरोच्चलकेतुकूटात् ।

१ गुटी गोली इ. प्र. २ वराहगणान्. ३ यस्य नाळ इ. प्र. ४ शुचिरनलः.

दूरान्निजाभिमुखसर्वविरोधिलोका-
नङ्गुष्ठचेष्टितततीरिव दर्शयन्ति ॥ ४३ ॥
उष्णीपलग्नशुचिरत्नवतंसरत्नं
पर्युल्लसत्तरुणिमारुणिमाङ्गरङ्गम् ।
सर्वातिशाय्यभिनवप्रणयप्रवीणा
यं सर्वदा समुपगूहति राज्यलक्ष्मीः ॥ ४४ ॥
यस्य प्रकृष्टरुचिना वपुषा तदैव
धिक्कृत्य मामिह जना बहु लज्जयेयुः ।
दृश्यं भवेद्यदि वपुर्ननु मामकीनं
प्रागेव तन्निजवपुर्मदनेन मुक्तम् ॥ ४५ ॥
दृग्भ्यां निपीय यमुदञ्चितविभ्रमाभ्यां
सोत्कण्ठमात्मफलके[2] रजसा विहीने ।
नव्यानुरागभृतशोभनचित्ततूल्यै[3]
काश्चिल्लिखन्ति ललनाः परिहृष्टगण्डाः ॥ ४६ ॥
नानाविधोन्नमदमन्दतरङ्गसंघे
यद्भास्वरानघमुखच्छविनीरपूरे ।
कासांचन प्रपतदक्षिगणा वधूनां
संबिभ्रते शफरशीफ[4]रयानलीलाम् ॥ ४७ ॥
सर्वा निशान्तवनिता नवयौवनोष्म-
प्रस्वेदसंकुलनिराकुलकम्रकायाः ।
रागाम्बुपूर्णयदुरस्स्थलकुण्डमध्ये
प्रोत्लुत्य मीलितदृशो विविधं[5] तरन्ति ॥ ४८ ॥
कन्दर्पकोटिकमनीयकलेवरो यः
पर्युन्मिपन्नववयः सुपमाविशेपात् ।

---

१ अधिकतरप्रथमप्रेमातुरेत्यर्थः. २ आत्मरूपं यत्फलकं तत्र. ३ तूली चित्रलेखिनी. ४ शीफरशब्दः सुन्दरार्थक इत्यत्र दशकुमारचरितं तयोः प्रावर्त्तत शीफरो रतिप्रबन्ध इति तदिह प्रमाणमूल्यम्. ५ बन्धविशेषैः.

चक्षूंषि मङ्क्षु महिलानिवहस्य दूरा-
त्सान्निध्यतश्च हृदयानि जरीहरीति ॥ ४९ ॥
तूर्णं विकस्वरमदा इव कर्णकंसै[1]-
रापीय यल्लपनसंलपनामृतौघम् ।
बाला मुहुः प्रपतितोत्पतित[2]स्तनास्य-
वस्त्राञ्चलं विदधते विविधान्विलासान् ॥ ५० ॥
[3]दोर्द्वन्द्वगूहितकपोलगलं च तत्त-
त्संबुद्धिपूर्वककलोक्ति च लालयन्ति ।
प्रौढाः स्त्रियो रहसि काश्चन कामकेलि-
कल्पक्रमातिकुशलं यमजस्रमारात् ॥ ५१ ॥
आक्रीडमण्डपपथेषु चिरं यदीय-
माजानुदीर्घबलवद्दृढबाहुदण्डम् ।
आलम्ब्य चारु विहरन्ति समिद्धरूप-
ज्योत्स्नाकिरः प्रबलकाममन्दाधयोषाः ॥ ५२ ॥
वैदग्ध्यसंवलिततत्तदशेषलीला-
श्चाञ्चल्य संकुलदृशोभिनवा महिष्यः ।
सौधेषु यं सरसनर्मविशेषविज्ञं
संस्नापयन्ति सततं स्मितसीकरौघैः ॥ ५३ ॥
कासां न यद्वदनचन्द्रमुदीक्ष्य पूरा-
न्नेत्रेषु रागपयसां निधयो लभन्ते ।
किं च त्रपा[4]प्लवगणा अपि भूरिदीर्घाः
कासां न तत्र सहसा परिबभ्रमन्ति ॥ ५४ ॥
यं सर्वतः प्रमदकाननकेलिकुञ्ज-
गर्भेषु दीर्घकदलीछदनान्धितेषु ।

---

१ कंसोऽस्त्री पानभाजनम्. २ प्रपतितं स्तनवस्त्रमुत्पतितं मुखवस्त्रमिति क्रमः. ३ दक्षिणहस्तेन गूहित आलिङ्गितः कण्ठस्तथा वामेन तेन कपोलौ तथेति लालनविशेषणे क्रमस्तास्ताः संबुद्धयश्च विदग्धुवभिः स्वयमेव स्मर्त्तव्याः. ४ ह्रीरूपा नाव इति.

भ्राजिष्णुभूषणगणैर्मणिदीपिकाव-
द्द्योगिन्य आसवमदोत्तरला ललन्ति ॥ ५५ ॥
नेत्राञ्चलैः पुरु निपीय पुरोत्सवेषु
श्लिष्यन्ति यं हृदयनीतमिव स्थिराक्ष्यः ।
दोःस्वस्तिकीकरणगाढनिपीडितांसाः
सीत्कार[1]चारुमणिताः कतिचित्तरुण्यः ॥ ५६ ॥
अयि जयनगरीयक्षोणिपाल त्वदीया-
द्रणविहरणकालात्प्राक्क्षणेऽन्तक्षणेऽपि ।
अहह सकलशत्रुव्रातसीमन्तिनीनां
प्रभवति बत वक्षस्तारहारावलीढम्[2] ॥ ५७ ॥

## खड्गबन्धप्रार्थना

संश्रितश्रीधवः श्रीमान्माधवः काव्यरंहसम्[3] ।
संस्तुवानं स मां दद्यात्स्वाश्रयं प्रोत्कमानसम् ॥ ५८ ॥
संशृणोत्वथ नानाधा मम काव्यं स्फुरद्रसम् ।
संघं शुचां संततं च द्यतु[4] हिंसितसंहसम् ॥ ५९ ॥
श्रीकुन्दननन्दनहरिवल्लभकविमल्लपल्लविते ।
जयनगरपञ्चरङ्गे काव्येऽगात्पञ्चमो रङ्गः ॥ ६० ॥
आसीन्मे स पितामहस्तु नृपतेः श्रीविष्णुरामो भिष-
क्तातः कुन्दनलाल इत्यतुलधीर्वैद्यागमाध्यापकः ।
श्रीयुक्तो हरिवल्लभाख्यतनयस्तस्य द्वितीयस्त्वहं
वाग्देवीवरिवस्ययास्मि कविताकर्मैकसर्वंकषः ॥ १ ॥
शब्दानामनुशासनं पठितवान् पूर्वं पितुर्यः परं
भ्रातु[5]श्छान्दसकाव्यकोशसहितं स्वीयं च तद्वैद्यकम् ।

---

१ सीत्कारगर्भितं रतकूजनं यासां तथा सत्यः. २ रणप्राक्काले पतिसत्वाद्वक्षस्तारा-वृहन्तो ये हारास्तैरवलीढं रणान्ते च पतीनामसत्वाद्धतेरिति यावत् तारा ये हा इति खेदसूचकाः रवाः शब्दास्तैरिति सभङ्गश्लेषः. ३ काव्ये वेगो यस्य. ४ खण्डयतु. ५ वैमात्रेयस्य तस्य ज्येष्ठस्य कृष्णरामेति संहूतिः.

श्रीमन्मैथिलजीवनाथगुरुतः साहित्यशास्त्रं तथा
भाईनाथगुरोश्च गौतममतं सोऽहं हरेर्वल्लभः ॥ २ ॥
चेद्यूयं हि बुधाः शृणुध्वमखिलाः श्रुत्वाऽन्यकाव्यान्यहो
वक्त्रं शोथयुतं विधत्त सुतरां वाचंयमा नीचकैः ।
सत्यं ब्रूत तदाऽत्र के ननु मुदा युक्ता भविष्यन्त्यहो
केवा दोषगुणान्वितं नु वचनं संव्याहरिष्यन्ति च ॥ ३ ॥
हरिवल्लभ इह सरलः सत्यं हरिवल्लभोऽस्ति सरलकृते ।
असरलकृते तु सत्यं तथैव खलु भल्लवरिहोऽस्ति ॥ ४ ॥
पुरुपाटवसंघट्टः सेवितसाहित्यसिन्धुचरमतटः ।
इह हरिवल्लभभट्टः सुन्दरसंस्कृतकवित्ववीरभटः ॥ ५ ॥
स्तुतजयपुरराजगुरुः संधूपितशम्भुसविधसाध्वगुरुः ।
एकोऽस्ति संश्रितगुरुर्द्विजहरिवल्लभकवित्वकारुगुरुः ॥ ६ ॥
गुरुभक्तिस्वबुद्धिभ्यां सिध्यत्सर्वमनोरथः ।
क्षणे क्षणे नवनवो वर्तते हरिवल्लभः ॥ ७ ॥
नास्तीदृक्पद्यमप्येकं कविमल्लप्रकल्पितम् ।
अल्पाऽनल्पाऽथ वा यत्र नैव काचिच्चमत्कृतिः ॥ ८ ॥



१ भल्लवराः सन्ति येषां भल्लवरिणस्तान्हन्तीति. २ पर्वणीकरोपनामकमहाराष्ट्रब्राह्मणाः श्रीमन्तो नारायणभट्टास्ते चास्माकं कुलगुरवः सन्ति. ३ अत्रैव तावत्सा दर्श्यते यथा यत्र का नाम चितां चमत्कृतिरल्पाऽनल्पा न अपित्वस्त्येव सातथा.

अथ

# श्रीहरिर्विजयतेतमाम् ।

# श्रीकविमल्लभट्टहरिवल्लभकृतिषु

# गौर्यलङ्काराः ।



श्रीगौरीदेवीकृते वैरिशिरोभल्लेन अलङ्कारशतकं नवं क्रियते कविमल्लेन ।

श्रीगौरी स्फटिकासनमधितिष्ठन्ती प्रतप्तहेमाङ्गी ।
दीधितिरिव नवसवितुर्जयति पतन्त्युपरि कमलस्य ॥ १ ॥

स्फुरति वदनमिव वदनं प्रसादसुभगं न केवलं गौर्याः ।
शिशिरप्रकाशधरमपि तत्सितमिव तत्सितं किंतु ॥ २ ॥

गौर्या आदर्शाविव गण्डौ गण्डाविवादर्शौ ।
नारङ्ग्यौ कलिके इव किंचोष्ठौ ताविवाथ कलिके च ॥ ३ ॥

[1]गौर्याश्चिबुकस्य पुरो नौचित्यं स्थलसरोजमुकुलस्य ।
विधिरिति बुद्ध्वा दूनो रजस्तदन्तर्निचिक्षेप ॥ ४ ॥

श्रीगौर्या वदनेन्दुर्नन्दति मन्दस्मितामृतं विकिरन् ।
मानसकुमुदं नित्यं विकास्यते येन गिरिशस्य ॥ ५ ॥

शरणागतजनरक्षिणि शृणु सदयं कर्णपर्णाभ्याम् ।
दल दर्पं दर्पवतामिति लघ्वीं प्रार्थनां गौरि ॥ ६ ॥

[2]चरणकराधरशोणां धवलां नखदशननयने च ।
केशकलापे कालीं गौरीं सर्वत्र संश्रये गौरीम् ॥ ७ ॥

काल्यास्तव नेत्राणि व्यालोक्य प्रज्वलन्ति संग्रामे ।
मातर्गौर्यसार्षुर्दैत्या रजनीप्रदीपानाम् ॥ ८ ॥

---

१ पञ्चमं प्रतीपमेतत्. २ शुद्ध उल्लेखोयम्.

मातरधोमुखचम्पककलिकाविभ्रमजडीकृतो गौरि ।
अभिपतति कराङ्गुष्ठस्थितो भवन्नासिकां कीरः ॥ ९ ॥
सीमन्तरत्नकान्तिं सुलोच्य गौरीकचेषु चञ्चन्तीम् ।
चपला घनेषु किमियं संशेते क्षणमिति त्र्यक्षः ॥ १० ॥
श्रीगौर्याश्चरणयुगे नालक्तक एष चित्रितश्चारु ।
किं तर्हि कोकनदयोर्बहिः स्फुरन्सान्द्रमकरन्दः ॥ ११ ॥
त्वं किंचिदञ्चितोष्ठा हससि यदा लसितदन्तभा गौरि ।
दीव्यसि तदा विदधती वदनादिव दुग्धगण्डूषान् ॥ १२ ॥
शृणु गौरि दिवि तरङ्गास्तदुपरि रत्नावली तरति ।
कम्बोर्विनिःसृता सा तदुपर्येकं प्ररूढमम्बुरुहम् ॥ १३ ॥
विरते महिषे भूपरि घृषन्ति दितिजाङ्गनाभिरक्षिभ्यः ।
पाणिभ्यो गौर्युपरि च विबुधवधूभिः सुमानि मुक्तानि ॥ १४ ॥
विद्रुमवल्लीशाखा मुखविलुठत्तुहिनशीकरैर्भान्ति ।
नखकान्तिभिश्चलाभिर्गौर्या देव्याः कराङ्गुल्यः ॥ १५ ॥
उज्झति दृशां पिधानं गौरीं सुरपतिरवेक्ष्य युद्ध्यचलाम् ।
दूरीकुरुते कम्पं प्रमथपतिः किं च हृदयस्य ॥ १६ ॥
कूर्पासकबद्धाभ्यां वक्षोजाभ्यां विराजते गौरी ।
किशलयरुद्धफलाभ्यां दाडिमवल्ली समुल्लसति ॥ १७ ॥
इह परिचरिता मातः सिद्धिकरासि त्वमेव गौरि परम् ।
किं च कृपैव गुरूणां शिष्यव्युत्पत्तिकारिणी कामम् ॥ १८ ॥
अयि गौरि तव जनन्याः स्तुतिकरणं यन्निरन्तरं किमपि ।
जपनक्रिया तदेषा काचन दिव्यस्य मन्त्रस्य ॥ १९ ॥
सामीप्याद्दृष्टैव क्व कल्पवल्ली समग्रवरफलदा ।
दूरात्स्मृताऽपि सकलाऽभिलापदोग्ध्री च गौरी क्व ॥ २० ॥
लाक्षारसप्रलेपात्स्वकीयदशनच्छदद्वयं गौरी ।
विदधाति खण्डपरशोः साकं हृदयेन संरक्तम् ॥ २१ ॥

१ द्वयोः प्रस्तुतयोर्भूगौर्योरेकक्रियान्वयइति. २ अर्थावृत्तिदीपकमिह.

अप्रतिहता अपि विधेः सृष्टिकृतौ शक्तयोऽखिलास्तास्ताः ।
अयि गौरि तावकीनामेकामाज्ञामृते परं विफलाः ॥ २२ ॥

[1]रसनिर्भरां निजोपरि निरीक्ष्य कादम्बिनीमयं बर्ही ।
अमृतार्थी पश्योच्चैर्गौरि करोत्युन्मुखः केकाः ॥ २३ ॥

अन्तर्ललाटविनिहितनव्यकलाधरकला गौरी ।
भक्तान्तःकरणानां तापं तिमिरं च निघ्नती जयति ॥ २४ ॥

भवदीयं महिमानं प्रवर्तमानस्य चारु नोनवितुम् ।
वाचो मलीमसा मे त्वं गौरय देवि हे गौरि ॥ २५ ॥

[2]पादपनायितमूलां सुरसार्थोत्पादनक्रियाप्रीताम् ।
निखिलाहार्यगुरुत्वां कामपि देवीं स्तुवे गौरीम् ॥ २६ ॥

[3]एको राजसु राजा सुरथाख्यः प्रागभूत्सुविख्यातः ।
यः खलु राष्ट्रभ्रष्टो गौर्यपरां देवतां न भजति स्म ॥ २७ ॥

विजये पश्य कदल्या अनिलचलल्ललितवल्कलौ काण्डौ ।
इति गौरी श्रुतशिवगीः पिदधे स्वौ विवसनावूरू ॥ २८ ॥

यां यत्पुरुषश्चक्रे चूडावलयाञ्चितैकचपलकराम् ।
चोलान्तःस्थैककुचां कामपितां सितरुचिं भजे बालाम् ॥ २९ ॥

[4]प्रागेकमहिषवैरिणि हतेऽपि तज्जातिमात्रजानपरान् ।
अद्यापि जक्षती हा सत्यं त्वं गौरि चण्डचेव ॥ ३० ॥

सा मत्प्रसूर्हि गौरी भो दैत्याः शृणुत सुप्रमत्ताऽभूत् ।
पातालेऽपि निवस्तुं युष्मान्दुष्टान्ययादिष्टम् ॥ ३१ ॥

---

१ देवीं प्रति कवेरुक्तिः गौरि पश्यायं बर्ही मल्लक्षणो जनश्च स्वोपरि गगने च कादम्बिनीं त्वां च रसेन आनन्देन च पूर्णां दृष्ट्वा उन्मुखः सन् अमृतं मोक्षं तदर्थी संश्च केकास्तदुपलक्षिताः स्तुतीश्च करोतीत्यप्रस्तुतपरिस्फूर्त्तेः समासोक्तिः. २ पाद-पनायित-पादपनायित-सुरस-अर्थ-सुर-सार्थ-निखिलैरहार्यं निखिलानां अहार्याणां शैलानां च. ३ सुरथस्तुत्या देवान्तरस्तुतिनिवृत्तस्य प्रस्तुतस्य कस्यचिन्नृपस्य स्तुतिः. ४ दैत्यदुष्टत्वस्मृत्या तज्जातिमात्रभक्षणेन देव्या देवोपरि कृपातिशयकारिणीत्वेन स्तुतिरत्र.

स्तोतुः कुलं कुरु त्वं कदम्बमुकुलोपमेयताकलितम् ।
इति कथये गौरि त्वामलमथवा त्वं हि वेत्स्यखिलम् ॥ ३२ ॥
त्वं श्रीगौरि कुचेष्टा पशुपतिनालिङ्ग्यसे सुचेष्टापि ।
त्वमसान्यापि[1] महेश्वरि मान्या जगतीह सुमनोभिः ॥ ३३ ॥
न तु तरुणो न सुरूपी न सुवसनो न च सदाचरणः ।
संपन्नोऽपि न गिरिशः कथं न जाने वृतो गौर्या ॥ ३४ ॥
त्वं गौर्येका वाला वहवश्चण्डाश्च चण्डमुण्डाद्याः ।
विवुधवधूसौभाग्यात्तथापि न पराजिता मातः ॥ ३५ ॥
निजरुधिरबिन्दुगणनानुसारसंभवदनेकनिजसदृशम् ।
तं रक्तवीजदितिजं गौर्यज्ञाता सुरैरचमीत् ॥ ३६ ॥
दैत्यैः सह युद्धे सति गौर्या मधु पीतमनवरतम् ।
स्थाणुरशेत चकम्पे नग्नो गद्गदमवग्जटा व्यकिरत् ॥ ३७ ॥
गौरि त्वमष्टहस्ता देवी हर्यक्षवाहिनी कुत्र ।
द्विकरो वाहनहीनः कुत्र च पशुजातिरसुरः सः ॥ ३८ ॥
विहितोत्साहं सुचिरं येनाचीर्णं तपोपि तदति महत् ।
कैशोरं वपुरवतात्तन्मां गौरि स्थलाब्जमृदुलं ते ॥ ३९ ॥
गौरि तव क्रूराया उपरि समग्रासुरान्ववायस्य ।
हिंस्रः सोऽपि विराजति वाहनतामुपगतः सिंहः ॥ ४० ॥
दितिजाः[2] श्यामा आसन्समीक्ष्य चित्रं रणाङ्गणे गौरीम् ।
तरसा च प्रचलन्तीमजनिषताहो सुरा अचलाः ॥ ४१ ॥
कष्टं कुट्टयतां मे गौरि तवाट्टाट्टहासः सः ।
आकाशमपि यमात्मनि पर्यापयितुं न शक्तमिदम् ॥ ४२ ॥
मध्यः कियानिति मृडोऽमित्सत्तव गौरि कमलसूत्रेण ।
मेयाऽदर्शनतः परमासीन्निःस्पन्ददृक् सुचिरम् ॥ ४३ ॥

---

१ न मान्या मया अन्या न च. २ गौरीं वालां दृष्ट्वा सद्योजयेन प्रसादस्य इष्टस्य विपरीतं औदास्येन श्यामीभवनम् चलन्तीं दृष्ट्वा च येनकेनापि निग्रहणस्य इष्टस्य अनिग्रहकरं विपरीतमचलनमिति विचित्रम्.

गौरी कपोलपाली गौर्याः कुटिलालकस्रजा ललति ।
सा श्यामला च सुषमां कपोलपाल्या समातनुते ॥ ४४ ॥
[1]अपितुः कविमल्लस्य त्वं ह्यग्रे त्वं ह्यनु त्वमुभयसात् ।
रक्षिष्यसि गौरि त्वं सत्यमिदं करुणमुच्यते वचनम् ॥ ४५ ॥
अयि गौरि तत्रभवती भवती निखिलक्रियासु बहुशक्ता ।
सृजसीच्छयैव यत्त्वं सर्वं पुनरिच्छयैव संहरसि ॥ ४६ ॥
उर उत्कम्पिकुचाभ्यां च्युतचोलौ तौ प्रलम्बकचवीच्या ।
स्नानाम्बुशीकरैः सा तेऽपि सुगन्धेन भान्ति तव गौरि ॥ ४७ ॥
मुक्ता हीरकयुक्ता हीरान्तर्जटितपद्मनीलकणाः ।
तद्विरचितौ वतंसौ गौर्याः कर्णोपरि स्थितौ तौ च ॥ ४८ ॥
कनकतुलाकोटिभ्यामुपरि त्वच्चरणयोः सदा गौरि ।
कविरसनाया उपरि त्वच्चरणाभ्यां च नृत्यते सुचिरम् ॥ ४९ ॥
तरलं तर्णकरमणं ततोपि खलु शफरकन्यकातरणम् ।
गणिकाचित्तं च ततस्ततोऽपि गौर्या दृशोर्युगलम् ॥ ५० ॥
सकलविधैश्वर्यवति श्रीगौरि त्र्यक्षवल्लभे मातः ।
आधिं व्याधिमुपाधिं निर्मूलय शमय [2]धेय च भक्तस्य ॥ ५१ ॥
गत्युपमा प्रियपुरतो यान्त्यास्तारुण्यमन्थरं गौर्याः ।
अपहाय हंसरमणीं करेणुकामभिसृतिं विदधे ॥ ५२ ॥
चातुर्योपचितासि श्रीगौरि त्वं भृशं जननि ।
दत्वा मनाग्रुषं दितिभवेषु याऽतिप्रसादमाप्तवती ॥ ५३ ॥
श्रीगौर्या मातरि मे रणरङ्गे संप्रतिष्ठमानायाम् ।
आत्मीयोत्साहस्य न भङ्गोऽजनि कञ्चुकीगुणानां तु ॥ ५४ ॥
स्वीयस्तोत्राणि कुचितदृग्युग्मं प्रपठतो निजान्दृष्ट्वा ।
श्रीगौरी संतनुतां प्रसन्नतां मन्दहासं वा ॥ ५५ ॥

---

१ द्वितीयविशेषोऽयम्. २ पिबनिश्शेषयेत्यर्थः.

युधि[1] महिषोपरि बाणान्मुञ्चन्तीं लम्बकुन्तमस्यन्तीम् ।
परिघं च पातयन्तीं प्रचालयन्तीमसिं भजे गौरीम् ॥ ५६ ॥
अयि गौरि त्वां भक्ताः प्रणमन्ति नुवन्ति किमपि नाथन्ति ।
तेषामुपरि त्वमपि क्षाम्यसि हृष्यसि करोषि[2] कृपाम् ॥ ५७ ॥
अधिगर्भवेश्म गौरी संनिहिता किमपि शम्भुनाऽभिहिता ।
उद्गतरोमाञ्चाऽजनि कुचपानादुपरराम चेभमुखः ॥ ५८ ॥
गौरि त्वदङ्घ्रिपाताद्बिभ्यत्कुपितः स सैरिभो दैत्यः ।
वेगात्सिंहाभिमुखं शृङ्गयुगं धावति स्म संधुन्वन् ॥ ५९ ॥
देवानामेवारीन्व्यवधीद्गौरी कृपावती या द्राक् ।
का वार्ता शत्रूणां मनुजस्यैकस्य मे तर्हि ॥ ६० ॥
भो भो भयानि जगतां ननु दूरीभवत यूयमह्नाय ।
हृदि मेऽखिलायुधधरा वसति सदा भगवती गौरी ॥ ६१ ॥
गौर्याश्चरणरजोभिः शीर्षेषु स्थीयते नमद्द्युसदाम् ।
आश्रयबलेन लघुरपि भवति समाक्रान्तमस्तको महताम् ॥ ६२ ॥
अयि गौरि तव मुखेन्दुर्धर्षितुमपि चिन्त्यते न हृदि तमसा ।
धृष्याः कदाचनापि हि न सज्जना इव भवन्ति निर्दोषाः ॥ ६३ ॥
उद्दिश्य हरं गौर्या विहितानां मधुरिमा चटूक्तीनाम् ।
अधिवेलममृतसिन्धोः सिताद्रवासिक्तगोस्तनीसध्र्यङ् ॥ ६४ ॥
अयि गौर्यहं भवेयं मार्कण्डेयो मुनिर्यदा मातः ।
चरितानि तवाऽशेषाणीडितुमीशेय तानि तानि परम् ॥ ६५ ॥
उपरि महिषासुरस्य प्रतिबोन्मीलत्स्थिरारुणाक्षितलाम् ।
अयि गौरि देवि भवतीं पावकजन्मा निरीक्षेत ॥ ६६ ॥

---

१ देव्या बहुकरताया बाणमोचनादीनां बहूनां भावानां युगपद्गुम्फ इति ध्येयम्. २ ददासीत्यर्थः.

हे[1] गौरि दक्षतनये भवतीं स्तोतुं समुद्यतोऽयमहम् ।
गगनममेयं मातुं मोहात्कुर्वे वितस्तिका लम्बाः ॥ ६७ ॥
त्वामेव देवि गौरि प्राणायामेन मनसि संस्मरते ।
पूजयितुं पशुपतये त्वामेव प्रैषयद्गिरिर्हिमवान् ॥ ६८ ॥
एषा मोक्ष्यति केशानुच्चैः खड्गं प्रचालयिष्येऽहम् ।
इति हृष्यति महिषेऽधो द्विधा व्यधादहह गौरी तम् ॥ ६९ ॥
इयमसुरेन्द्रध्वजिनी शमयिष्यति मधुरवीर्यकण्डूतिम् ।
युद्धाऽपि मत्कराणां स्पृहयन्ती जयति गौर्येवम् ॥ ७० ॥
यावदभिलाषदात्रीं त्वामासाद्यापि योगिनः केचित् ।
न धनं न सुतं न गृहं स्त्रियं न वाञ्छन्ति किंतु कैवल्यम् ॥ ७१ ॥
गौरि तव लपनविदलितनागलतादलसुवीटिकासलिलम् ।
प्रत्तसकलवाक्पत्यं मम रसनान्तः सदा स्खलतु ॥ ७२ ॥
खादनपानविधात्री दैत्यानां पललरुधिरयोरेषा ।
इत्युच्यसे यदमरैः फलं हि तद्गौरि तव शक्त्याः ॥ ७३ ॥
बिम्बितजनमुखनयनालिकललिता तव ललाटिका[2] स्निग्धे ।
इति विजयोक्ता गौरी मन्दं मन्दं किमप्यहसत् ॥ ७४ ॥
त्वं नाम महाकाली त्वमेव किं चासि सा महालक्ष्मीः ।
महती सरस्वती त्वं सर्वमयी त्वं हि हे गौरि ॥ ७५ ॥
स्नानकृतौ सकलात्तव शरीरतः प्रक्षरन्ति सलिलानि ।
पिङ्गद्युतीनि कामं गौरि सुवर्णद्रवायन्ते ॥ ७६ ॥
रोषाधिकशोणाभ्यां मातर्गौरि त्वदीयनेत्राभ्याम् ।
अस्तं गतेऽपि सूर्ये संयुगभूमौ महान्प्रकाशोऽभूत् ॥ ७७ ॥
कज्जलपरिष्कृतान्यपि शुचीनि तव लोचनानि गौरि परम् ।
रक्तं स्मरान्तकस्य स्वान्तं कुर्वन्ति मां पान्तु ॥ ७८ ॥

---

१ इह द्वितीयमग्रिमं ललितमस्ति. २ ललाटिका बन्धविशेषः कश्चिदालिङ्गनप्रकार इति सुखे मुखमासज्याक्षिणी अक्ष्णो ललाटेन ललाटमाहन्यात्सा ललाटिकेति वात्स्यायनीये स च सूच्यः भूषाविशेषललाटिका प्रकृते वर्ण्यमानाऽस्ति तया तत्तात्कालिकी सा ललाटिकापि सूच्यते सख्याहि एवं सूच्यत एव.

नवपद्ममणिभिररुणा देव्या वक्षस्स्थली गौर्याः ।
उत्सङ्गस्थितगजमुखकुम्भगसिन्दूरतोऽत्यरुणाः ॥ ७९ ॥
[1]मातुर्गौर्या हस्ते शोणिमशोभास्वभावबहुशस्ते ।
नाकल्यते स्थितं तत्कोकनदं स्तोकसंफुल्लम् ॥ ८० ॥
कैलासोपवनोद्भवरत्नमयव्रततिवृन्दमध्यगता ।
नो पर्यचायि गौरी हरेण सविधस्थितेनाऽपि ॥ ८१ ॥
अयि गौरि देवि मातः केतककलिकावदातललिताङ्गी ।
संविद्रते सुगन्धा त्वदङ्गसंलग्नचन्दनं प्रमथाः ॥ ८२ ॥
तीक्ष्णा यथा रवेर्भा त्वदसेर्धारापि गौरि देवि तथा ।
महिषवपुरुपरि पाते धारा धारैव भा भैव ॥ ८३ ॥
[2]गौरीं स्तुवेऽवकाशो नाद्य गुहं स्वापयन्त्या मे ।
किञ्चित्पिपृच्छिषसि चेत् स्तोकं तिष्ठेति शम्भुमभिदधतीम् ॥ ८४ ॥
अभिमुखमुदीक्षमाणे प्रेयसि गिरिशे चिराद्गौरी ।
अलिकतलेऽधिकविमले कुङ्कुमतिलकं सुनिस्तलं चक्रे ॥ ८५ ॥
[3]प्रातर्विलोक्य गौरीं संदितकबरीयथास्थसुममालाम् ।
स्मयमाना सा विजया लिखितवती तत्करे शूलम् ॥ ८६ ॥
सखि पश्य भूतपतिना प्रसह्य लिप्तासि चन्दनद्रवतः ।
इति निगदन्ती विजयां स्वेदगभसिताऽवताद्गौरी ॥ ८७ ॥
धैर्यं धारय चातक वर्षिष्यति सपदि वार्मुचां पङ्क्तिः ।
सुचिरं ग्रहीष्यसि रसं ससखी गौरीत्यवङ्मृडाभिमुखम् ॥ ८८ ॥
मां मुञ्च कश्चिदेष्यति ननु गत्वा वहिरुपैमि तिष्ठ त्वम् ।
इति दर्शितानुकूल्या गौरी गिरिशप्रतीक्षिता पायात् ॥ ८९ ॥
फलके काऽपि लिखन्ती प्रेयोमूर्तिं कदाचिदपि गौरी ।
विजयां वीक्ष्याऽभियतीं कमपि विरक्तं द्रुतं व्यलिखत् ॥ ९० ॥

१ हस्तरक्तकमलयोः सादृश्यादभेद एव लक्षितो भवति इति मीलितम्. २ उन्नीतप्रश्नमन्नोत्तरमस्ति. ३ पुरुषायितस्य कृतत्वात् सुसंनद्धकेशपाशदर्शनेन तज्ज्ञापनार्थं करे शूललेखनम्.

मम यदि देव्या गौर्या भवनाग्रद्वारदेहलीसीम्नि ।
नासा नाम निघृष्टा वरं निघृष्टाऽस्तु सा तर्हि ॥ ९१ ॥
[1]गौरी करिष्यति न वा मदुद्धृतिं संसृतेः किलैतस्याः ।
आभाणकमत्रेदं वेत्त्यखिलः स्वीयमस्वीयम् ॥ ९२ ॥
मा कलहं संधर हृदि कलहंसं धरति कोपि न हि हृदये ।
इति मूकीकुर्वाणां पिनाकिनं मानिनीं स्तुवे गौरीम् ॥ ९३ ॥
सिंहेन श्रीगौर्या उपसलिलं सुप्यते गुहागर्भे ।
भूलम्बितकरकण्ठं स्फुरदुदरं विमिलदलसनयनं च ॥ ९४ ॥
अधुनापि क्वापि करे खड्गं क्व च चक्रमिषुमपि क्वापि ।
क्व च कुन्तं क्व च परिघं पाशं क्व च बिभ्रतीं भजे गौरीम् ॥ ९५ ॥
[2]सुरशक्तिभिरखिलाभिः परिवृतया सति रणे त्वया दितिजाः ।
सा कादिशक्तिरिति न हि निरचैषुर्गौरि सहसा त्वाम् ॥ ९६ ॥
निःशेषदैत्यहननाद्विहिता भूर्गतभरा त्वया गौरि ।
पतितहतदैत्यदेहैः पुनरेषा धृतभराऽकारि ॥ ९७॥
[3]अमथाः सकलजनन्यपि यत्त्वं स्त्रीत्वं पुरैकदैत्यस्य ।
तस्मादयि गौरि महामायेति प्रोच्यसेऽखिलैः सत्यम् ॥ ९८ ॥
रे रे महिप मदोद्धुर संप्रति युद्धं पुरो न पङ्कमिदम् ।
स्थितिरिह तरलैश्चरणैर्महिषं देवीत्यभर्त्सयद्गौरी ॥ ९९ ॥
श्रीगौरि देविचण्डी चण्डी त्वं चण्डमुण्डयोश्चमने ।
त्वं किंच शिवा मातः प्रणमद्भक्तव्रजेऽसि शिवा ॥ १०० ॥
[4]कुन्दनलालतनूजो हरिवल्लभभट्टकविमल्लः ।
गौरीस्तुतिकाव्यमिदं व्यामोहव्यपगमाय संव्यतनोत् ॥ १०१ ॥
एताः शतं कुवलयानन्दप्रस्फुरणकारिका आर्याः ।
कविताङ्कुरकरणकृते कल्पन्तां कविकुमाराणाम् ॥ १०२ ॥

इति गौर्यलङ्काराः ।

---

१ अहं तदीय एवेति संसृतेः सोद्धरिष्यत्येवेत्यर्थान्तरगर्भिता अस्य. २ सहसोक्तेः द्वित्रिक्षणमनुविशेषज्ञानात्परिचयो जात एवेति देवीप्रभावरूपार्द्धवर्णनम्. ३ शौर्यात्युक्तिरसौ. ४ द्रष्टव्याऽत्रदुर्गापाठकथा. ५ उदाहरणमेवेदम्. अत्र ग्रन्थे शतोक्तिरेकाधिका न विषमोदाहरणस्य द्विकृत्वःस्थितत्वात्.

# श्रीकविमल्लभट्टहरिवल्लभरचिताः

# कान्तावक्षोजशतोक्तयः ।

अथ

# श्रीकविमल्लभट्टहरिवल्लभरचिताः

# कान्तावक्षोजशतोक्तयः[1]

समुपक्रम्यन्ते ।

## श्रीहरिर्जयतितराम् ।



प्रोन्नतौ सरिदधीशकिशोर्यास्तावुभावुरसिजावभिवन्दे ।
युग्मकेन किल यत्र मुरारेः पाणयः प्रविहरन्ति चिराय ॥ १ ॥
ऊधसो द्वितयमायतमूलं वक्षसा प्रकटमेव दधाना ।
सर्वथा जयति काचन दिव्या कामधेनुरिह कामिकुलस्य ॥ २ ॥
प्रस्फुरन्निबिडयौवनभाजामुच्छ्रितं कुचयुगं प्रमदानाम् ।
भासते प्रतरतां रतसिन्धौ प्रेयसामिव वलम्बनभूतम् ॥ ३ ॥
आश्रिताज्जघनदिव्यधरित्रीं नाभिकन्दत इयाय जनिं या ।
रोमराजिलतिका तव सेयं वल्लभे स्तनफले फलति स्म ॥ ४ ॥
उद्भवेन कुचयोर्वनितानामुद्भवोऽस्य जगतः सकलस्य ।
वर्तनेन च तयोः किल वृत्तिर्मन्मते लयत एव लयोऽपि ॥ ५ ॥
यत्क्रमेण परिमूर्छति सार्द्धं प्रेयसा परिचयो नववध्वाः ।
तत्क्रमेण नु कुचोद्गमदम्भान्मानसी कठिनता बहिरेति ॥ ६ ॥
उन्नतं बहुतरां पृथुलाक्षी सा दधाति सपदि स्तनयुग्मम् ।
रोधनाय पुरुचापलकर्त्र्योर्दुर्गयुग्ममिव कामुकदृष्ट्योः ॥ ७ ॥
रुद्धतुङ्गकुचकञ्चुकनीचैर्गाढसक्तसिचया निलयाग्रात् ।
भापनार्थमिव सा पथिकानां द्राङ्मुहुर्मुहुरुपैत्यृजुहस्ता ॥ ८ ॥

---

१ जातुचित्प्रसङ्गे स्तनशतकं नास्ति इति नानाकृतवः श्रीनारायणभट्टैरुक्तमतस्तदाज्ञानुरोधेनैषा नवीनतमाकृतिर्मदीया इति ज्ञेयम्.

वाससा विरहितं सुमुखीनां पीवरं सुकठिनं स्तनयुग्मम् ।
भात्यलिन्दयुगवद्धृदगारद्वारसीमनि मनोजनृपस्य ॥ ९ ॥
व्रीडया निबिडनीतवगुण्ठा साऽधिकोन्नतकुचा पथि यान्ती ।
उन्नताननतया सहचर्या प्रेरिता समवगच्छति पृथ्वीम् ॥ १० ॥
वीक्षिता प्रियतमेन करौ यद्वक्षसि न्यसति संत्रपिता सा ।
तन्वखण्डितकुचोन्नतिसिध्यै संततं नमति तं विनयेन ॥ ११ ॥
गाढकृष्टघनरश्मिवितीर्णग्रन्थि मन्थरविलोचनयोच्चैः ।
सीयते कुचयुगं खलु मूर्तं यौवनं स्वमिव कञ्चुलिकायाम् ॥ १२ ॥
रागभाजि हृदि मुग्धवधूनां निर्भयं किल सदा कुसुमेषुः ।
न्यस्य नीररुहकोशकठोरौ संस्वपित्युरसिजावुपबर्हौ ॥ १३ ॥
मीनकेतनमहाहवकाले सुभ्रुवः पृथुतरं कुचयुग्मम् ।
रक्षणाय हृदयस्य पुरस्ताच्चञ्चतीव युगलं फलकस्य ॥ १४ ॥
सर्वतः खलु विशेषचलाया योषितां लघुमनोवसुधायाः ।
नूनमम्बुजभुवा स्थिरतायै कल्पितं गिरियुगं कुचकूटात् ॥ १५ ॥
एणशावकदृशः समुदग्रौ चित्तभूः कुचहुंडावधिरुह्य ।
आश्रुतिप्रचुरकृष्टततज्यं मानसानि बत विध्यति पुंसाम् ॥ १६ ॥
निर्भरोल्लसदगाधतलश्रीर्वर्तते वियति कश्चन कूपः ।
तस्य चाहह विभात्युपकण्ठे कुम्भयुग्ममम्रुतोम्भितमुच्चैः ॥ १७ ॥
यौवनासमशरावुपयान्तौ संनिधावतिथिवत्समवेक्ष्य ।
तुङ्गपीठयुगलं स्तनदम्भादास्तृतं हृदजिरे नवनार्या ॥ १८ ॥
विस्फुलद्विपुलतुङ्गकुचाग्रा कामिनी रतिविधौ विपरीते ।
सौधकुम्भयुगलेन सलीलं सिञ्चतीव हृदयं दयितस्य ॥ १९ ॥
उन्मुखावुदधिरूढकञ्चुकौ प्रौढपङ्कजदृशः पयोधरौ ।
पञ्जरान्तिक इव स्थितावुभौ स्फूर्जतश्चटुलतित्तिरात्मजौ ॥ २० ॥
सुन्दरी गुरुतरस्तनभारा केवलं न गुरुलोकपतिभ्याम् ।
व्रीडनं वहति हन्त नितान्तं किन्त्वहो स्वयमपि स्वत एव ॥ २१ ॥

१ उरजद्वे प्र.

वल्लभस्य करपल्लवयोगात्प्रस्फुरन्नुरसिजस्तरलाक्ष्याः ।
आश्रयत्यनड्डहोऽभ्युपमृष्टः संधुनन् ककुदिव श्रियमुर्वीम् ॥ २२ ॥
मानसे विहरतो निगृहीतं शृङ्गयुग्ममिव कामसुरारेः ।
दोर्युगात्प्रणयिना परिरब्धं जृम्भते वरतनोः कुचयुग्मम् ॥ २३ ॥
कामिनीं करयुगान्तररुद्धामोष्ठयोः प्रणयवानभिचुम्बन् ।
प्रोतगात्र इव तत्कुचकूटद्वन्द्वतः सुनिभृतश्चिरमासीत् ॥ २४ ॥
आप्लवस्य समये सहसैव प्रेक्षिता प्रियतमेन मृगाक्षी ।
स्वस्तिकेन करयोः कुचकुम्भावूर्ध्वतो हि पिदधे न तु पूर्वात् ॥२५॥
अन्यतः सततपातिततीक्ष्णप्रेक्षणीयपरिणाममिवाप्ताः ।
कामकेलिषु नखक्षतलेखा भामिनी कुचयुगोपरि धत्ते ॥ २६ ॥
नैतदस्ति हृदयं ललनायाः किंतु केलिभवनं कुसुमेषोः ।
नापि वक्षसिरुहौ हह तस्मिँस्थायुकस्य किल तस्य हि जानू ॥२७॥
गर्गरीं घटयुतां जलपूर्णां मूर्ध्नि नेतुमनुकः सुदृशोक्तः ।
मोहतोऽहह घटोन्नयकाले द्वौ कुचौ सुपृथुलावनिनीषीत् ॥ २८ ॥
धर्मसाम्यमिव नित्यपतानां प्राप्य नु प्रियकराग्रनखानाम् ।
प्रत्युताऽनिशविमर्दनतोऽपि प्यायते स्तनयुगं पुरु वध्वाः ॥ २९ ॥
वीक्ष्य धुर्यभिमुखाक्षमभीष्टं व्रीडया निजकुचौ विमिषन्ती ।
अय्यमू निवसती तव हीत्थं निश्चला ज्ञपयते ललिताङ्गी ॥ ३० ॥
सुभ्रुवो निधुवनावसरे हृन्नीलचूचुककनत्कुचयुग्मम् ।
लोचनाय चिरमिष्टजनस्य स्पष्टलोचनमिव प्रतिभाति ॥ ३१ ॥
उल्लसत्पृथुलवर्तुलचक्रा वक्षसि स्तनयुगी चपलाक्ष्याः ।
दृश्यते निजगृहे रतिभर्तुर्वल्लकी किल तिरोनिहितेव ॥ ३२ ॥
उन्नतात्कुचयुगात्प्लवमानः सुभ्रुवस्तरलहीरकहारः ।
प्रस्खलन्सुरगिरेः शिखराभ्यां भाति निर्झर इव द्युतटिन्याः ॥ ३३॥
मध्यनीतविवलत्तनु दोर्भ्यां श्लिष्यतः प्रणयिनः किल वक्षः ।
भूरि पृथ्वपि वधूः कुचयुग्माद्धन्त संकटतरं विदधाति ॥ ३४ ॥

१ अत्रीत्युक्तेः पुल्लिङ्गमपि.

मुद्रितां प्रियतमस्य रदाग्रैर्गण्डपालिमिव वीक्ष्य चलाक्ष्याः ।
प्रस्फुटं करनखैरपि वक्रैरक्रियन्त कुचसीम्नि निजाङ्काः ॥ ३५ ॥
कान्तमानसगतिं परिरोद्धुं मूर्छतोऽद्य नु तथा तदुरोजौ ।
प्राग्यथा रविगतिं परिरोद्धुं विन्ध्यशैलशिखरौ ववृधाते ॥ ३६ ॥
सर्वतो विकसदङ्कुरवृन्दं कोरकद्वयमिव प्रियकस्य ।
शोभते दयितपाणिविमृष्टं हृष्टरोम सुदृशः स्तनयुग्मम् ॥ ३७ ॥
मुग्धिकास्तनधृता प्रियदोष्णा छिन्नहारगुलिकानिकुरम्बम् ।
आत्मनो रिपुसरूपधृतीष्टात्पारितोषिकमिवात्तमनङ्गात् ॥ ३८ ॥
अङ्गना रतकलान्तरकाले प्रेयसः प्रतिमुहुर्बत वक्षः ।
आघ्नतीव रमते सुदृढोच्चैर्वर्तुलस्तनगदाग्रयुगेन ॥ ३९ ॥
संततप्रियकराग्रनिपाताज्जातवत्कलुषचिह्नमिवास्याः ।
नीलिमोल्लसितचूचुकयोगं सुभ्रुवो विजयते कुचयुग्मम् ॥ ४० ॥
कान्तदीर्णकलिकाकृति चोलं विस्तृतं कुचयुगं चपलाक्ष्याः ।
चक्रयुग्ममिव रत्यभिमर्दे भग्नमन्मथरथस्य विभाति ॥ ४१ ॥
साऽधुना स्तनतटे बहुचित्रां स्तोकपत्ररचनां नववामा ।
वागुरामिव दधाति गृहीत्यै कान्तलोचनकुरङ्गकसून्वोः ॥ ४२ ॥
सांप्रतं तरुणिमावसरेऽस्या वक्षसि स्तनयुगं विधुमुख्याः ।
व्योमनीव सति प्रावृषि काले मेघवत्प्रचुरमुच्छ्रयमेति ॥ ४३ ॥
सुन्दरी प्रचकितं पिदधाना संततं स्तनयुगं वसनान्तात् ।
कामराजनिधिभाजनयुग्मं दीव्यतीव नितरां परिपान्ती ॥ ४४ ॥
आश्रितः किल यदादि वधूट्या वर्धनक्रम उरोजयुगेन ।
दुष्टया बहु कनिष्ठननान्द्रा ही तदाद्यवहितिक्रम आतः ॥ ४५ ॥
एणशावकदृशः कुचयुग्मे कान्तदत्तकरजक्षतरेखाः ।
कुम्भिकुम्भयुगले स्फुटमुच्चैरङ्कुशाङ्कनिवहा इव भान्ति ॥ ४६ ॥
कामकेलिसमये च्युतवस्त्रा प्रस्फुटस्तनतटा करभोरूः ।
आलिलिङ्ग चतुरा सहसैव व्रीडिताऽतितरसा प्रियवक्षः ॥ ४७ ॥

१ पराङ्कर्मकत्वाच्छतृप्रत्ययः.

मुग्धिका रहसि सून्नमिताङ्गा भर्तुरीक्षणह्रियाशु तथोर्व्याम् ।
आस्त संवृतकुचा चिरकालं नोत्थितः किल यथा स निषण्णः ॥ ४८ ॥
योषितां पृथुपयोधररूपं स्वावमाननपरं पुरु मत्वा ।
श्रीफलप्रभृतयो विपिनस्था आपतन्ति बत वृक्षभृगुभ्यः ॥ ४९ ॥
सक्तचोलचिरबन्धविमुक्तौ निस्तलायततरौ ललनायाः ।
मल्लतां कलयतः कुसुमेषोर्मुद्गराविव कुचौ किल शङ्के ॥ ५० ॥
चोलतः प्रतिमुहुर्बहिरेव प्राप्तुमद्य लषतस्तदुरोजौ ।
उन्नतीकृतमुखौ चकितौ द्वौ चक्रवाकपृथुकाविव नीडात् ॥ ५१ ॥
प्रागवेक्ष्य करिणं पथि यन्तं त्रस्यति स्म बहु या खलु मुग्धा ।
पीवरोन्नतकुचामधुना तां वीक्ष्य साध्वसमुपैति करी सः ॥ ५२ ॥
मग्ननीलवदनं स्तनयुग्मं चोलके दृढतरं मदिराक्ष्या ।
नह्यते न्विव मृदङ्गकयुग्मं भाविमन्मथमहोत्सवहेतोः ॥ ५३ ॥
वाततुन्नवसनावभियान्त्याः सुभ्रुवः पृथुकुचौ बत पान्थः ।
गोलकाविव मनोभवबर्हिर्यन्त्रियौ झटिति वीक्ष्य मुमोह ॥ ५४ ॥
संममर्द सुदृशोऽभ्युपगूहन्नीप्सितोऽतिरभसात्स्तनकुम्भौ ।
संमुखाधरधितिप्रतिबन्धौ नन्वमू हि धिषणामिति बिभ्रत् ॥ ५५ ॥
यर्हि किञ्चन दधार कपोलापाननिर्भररतः शिशिरत्वम् ।
तावदेव तरुणः प्रणयिन्या ताप्यते स्म नितरां स्तनघर्मात् ॥ ५६ ॥
भान्ति वक्षसिरुहोः कमलाक्ष्याः प्रेयसः कररुहव्रणलेखाः ।
दाडिमीयफलयोरिव पाकं प्राप्तयोः शुकमुखाग्रकलङ्काः ॥ ५७ ॥
सुभ्रुवश्च्युतपटं किल हस्तस्वस्तिकोपवलितं स्तनयुग्मम् ।
मण्डलस्थमिव कुण्डलिकाया नर्मदेश्वरयुगं प्रतिभाति ॥ ५८ ॥
सांप्रतं गृहगता रमणी सा संततं पटदृशोन्नयदम्भात् ।
दोर्वलम्बमनुवेलमिव स्वे दुर्वहस्तनयुगे खलु दत्ते ॥ ५९ ॥
उच्चकैर्भवति नूतनवध्वा मानसे प्रतियथं रसपूरः ।
अप्यमू उरसिजौ च तथैवाम्भोरुहौ भवत उन्नतिमन्तौ ॥ ६० ॥

१ बर्हियन्त्रं वह्नियन्त्रं तस्येमौ तद्भवौ वा.

वीक्ष्य चञ्चलदृशः स्तनदेशं नैकधाभिदधतेऽद्य युवानः ।
कुर्वतेऽहि ननु के न कठोरोद्वृत्तदुर्मुखकथामिह लोकाः ॥ ६१ ॥
वल्लभेऽभ्युपगते वरवध्वा उच्छ्रसत्स्तनयुगं जयतीषत् ।
चोलबन्दिनिलयादमुतो मां मोचयाशु तमितीव विवक्षु ॥ ६२ ॥
बाढमैक्यमितरेतरमात्मभ्रातृवक्षसिरुहोर्नु विलोक्य ।
संप्रति स्फुटतमं परिहृष्टा लक्ष्यते हृदि रतिर्नववध्वाः ॥ ६३ ॥
त्रातये निजवधूस्तनसंपद्भाण्डयोर्हरहतः खलु कामः ।
चूचुकस्य कपटेन भुजङ्गीभूय संस्थित इव प्रतिभाति ॥ ६४ ॥
प्रायशः प्रियतमस्य सदेशे वर्तते यदधिकं हरिणाक्षी ।
तत्र भूरिदृढपीनकठोरीभूततत्कुचबलं हि मतं मे ॥ ६५ ॥
उन्नतौ सुमसृणौ सुमुखी सा संबिभर्त्युरसिजावधिवक्षः ।
स्तम्भयुग्ममिव कामुकचेतश्चारणाऽखिलकलारमणार्थम् ॥ ६६ ॥
चित्रचित्रशकलांशुककीर्णा कञ्चुली कुचयुगे प्रमदायाः ।
क्रीडनाद्रियुगले मधुमासश्रीरिवोल्लसति कामनृपस्य ॥ ६७ ॥
सुन्दरीस्तनयुगं समवेक्ष्य स्नेहवत्प्रियमनो द्रुतमासीत् ।
संश्रयं विदधतः खलु तस्मिन्नूष्मणो नु निबिडात्परितापात् ॥ ६८ ॥
मुग्धिकाहृदवनौ द्रुहिणेन प्रोप्यते स खलु यद्रतिबीजम् ।
रोहति प्रियकरानिशसिक्तं संप्रति स्तनपदेन तदेव ॥ ६९ ॥
लक्षणानि रमणीस्तनसीम्नि स्तोकलोहितमुखानि नखानाम् ।
कामकण्टकततेः खलु वर्त्मानीव भान्ति दयितेन हृतायाः ॥ ७० ॥
भ्राजते तरुणिमा ललनाया विग्रहेम्बुधिरिवाद्यरसस्य ।
सुस्थिरं स्तनतटं च तथा तन्मध्यवर्त्युडुपयुग्ममिवोच्चैः ॥ ७१ ॥
सुभ्रुवः पृथुकुचद्वितयाग्रात्स्रंसते वसनवस्तमजस्रम् ।
कोहि भूरि गुणवान् सहवासं कर्कशैः सह विधातुमभीष्टे ॥ ७२ ॥
प्रेयसाऽभिमुखतः खलु बाला लोकिताऽधृत करौ कुचमूर्ध्नोः ।
उत्ततार किमु तत्स्मरतन्त्रप्रक्रियापठनगोचरपृच्छाम् ॥ ७३ ॥

उद्गमोन्मुखकुचं हृदुपान्तं व्यामृशन्नभिमतो नववध्वाः ।
ग्राह्यरङ्गमिव शम्बरशत्रोर्भाति कौतुकवशेन मिमानः ॥ ७४ ॥
नव्ययोषित उरोजनियुग्मं प्रोन्नतं प्रविततं प्रतिभाति ।
भर्तुरात्ममनसोरिव नूनं बन्धनाय युगलं शिवकस्य ॥ ७५ ॥
वर्त्तते नु कियदत्र गुरुत्वं बोधितुं किमिति खल्वनुवेलम् ।
प्रेयसा रहसि मुक्तगृहीतौ दोर्युगादुरसिजौ दयितायाः ॥ ७६ ॥
लक्ष्यतेऽति कठिनं कृशगात्र्या ग्रन्थियुग्ममधुना हृदि किञ्चित् ।
किञ्च चित्रममितं किल नित्यं तद्व्यथानुभवनं त्वपरत्र ॥ ७७ ॥
वीक्ष्य कान्तमभिगं ललनाया एजति स सहसा स्तनयुग्मम् ।
शीघ्रमेव सुचिरं निजभाव्युत्पीडनस्य निविरीसभयान्नु ॥ ७८ ॥
आदधाति हृदये परिपीनावुच्चकैरुरसिजौ कुटिलभ्रूः ।
शम्भुना पुनरपि प्रयुयुत्सोर्मन्मथस्य करयोरिव मुष्टी ॥ ७९ ॥
पश्यतः प्रणयिनीं नवयूनो लोचने चिरतरं विनिमेषे ।
मध्यविष्टतदुरोजनियुग्मव्यायतत्ववशतोऽभवतां नु ॥ ८० ॥
तत्थ्यमेव विकचाम्बुजमुख्या द्वौ गुरू उरसिजौ हि मतौ मे ।
ह्रीकृतिं मृदुगतिं च सदा सा शिक्षते बहुविधं यदमूभ्याम् ॥ ८१ ॥
नित्यवक्षसिजवर्धनदम्भान्नूतनस्तरुणिमा वरवामाम् ।
स्वामिनो बहुमुदे किमु तस्याः प्रत्यहं नवनवां विदधाति ॥ ८२ ॥
अब्जयोनिरतिविश्वमनोज्ञां कामिनीकुचयुगीं रचयित्वा ।
नेत्रदोषहृतये किल यूनां चूचुके व्यधित तत्र विनीले ॥ ८३ ॥
सांप्रतं तु सततं कमलास्या संश्रिताऽपरवया अपि नव्यम् ।
चोलकं विपरिवर्तयते सा पञ्चसप्तदिवसान्तरमेव ॥ ८४ ॥
सर्वतोऽतिविलसत्परिणाहौ तुङ्गवक्षसिरुहौ महिलायाः ।
कामभूभृत उभौ पृतनाया मण्डपौ कृततती इव भातः ॥ ८५ ॥
आयतौ बत तथा खलु जातौ प्रोन्नतावुरसिजौ नवभीर्वाः ।
तातवेश्मनि गता प्रतिवेश्यैः पर्यचायि सहसा न यथा सा ॥ ८६ ॥

१ भ्वादिकोऽयं बुधिः सेट्.

लुण्ठितुं नु नवयौवनकोशादिष्यते किममुनेति विवेक्तुम् ।
अक्षिणी प्रियमुरोदृशमैक्ष्य स्वाप्यदाज्झगिति तत्र चिरण्टी ॥ ८७ ॥

ईर्ष्ययेव नितरां ननु मन्ये श्रोणिबिम्बयुगलस्य तरुण्याः ।
वन्धुरं च विपुलं च गरिष्ठं संहतं च भवति स्तनयुग्मम् ॥ ८८ ॥

नूतना प्रियतमा गृहमध्ये सर्वदा प्रतिजनात् त्रपमाणा ।
प्रेम भर्तुरिव निर्भरवृद्धं निह्नुते स्तनतटं बहु भूयः ॥ ८९ ॥

सुभ्रुवः स्तनभुवः सकलं यद्दूरमास वसनं सहसैव ।
द्वैततापरिणतस्य तदेतद्ब्रह्मणोऽजनि किमावृतिभङ्गः ॥ ९० ॥

संदधद्दृढमुपांशु युवत्याः प्रोन्मुखस्तनमुरःस्थलमिष्टः ।
आधिपत्यमखिलं भुवनानामात्ममुष्टिगमिवाश्नुते स ॥ ९१ ॥

व्यायतोरसि भुवोर्वितताक्ष्या अग्रयुग्ममसितं मम भाति ।
कस्यचिन्नवजनस्य पतित्वा लोचनद्वयमिव प्रतिषक्तम् ॥ ९२ ॥

सीच्चकार मृदु सा पिहिताक्षी गाढपीडितकुचोच्चिबुकं यत् ।
कं समीक्षकजनं बहुवारं तन्न सीत्कृतयति स्मृतमात्रम् ॥ ९३ ॥

उत्कुचा पथि यती जनह्रीणा यत्प्रमाणमतनोदवगुण्ठम् ।
तन्मितस्वकुचपार्थवमासीद्व्यक्तिशालि वत प्रत्युत तेन ॥ ९४ ॥

चोलके निजसमं दृढमेनाऽवर्धवन्धन करौ नियमान्तौ ।
इत्यवेत्य हि करौ न सुदत्या वल्लभं धृतकुचं निररुन्धाम् ॥ ९५ ॥

दर्श्यते स्तनतटो दयिताय प्रौढया सुरततान्तिमिषेण ।
कश्चनाऽपि विलसन्निजलावण्याम्बुधेः सुसितसेतुरिवोच्चैः ॥ ९६ ॥

ईप्सितो रह उपेत्य रमण्याः प्रोच्छ्रितं कुचयुगं रभसेन ।
संन्यपीडयत भूरि विशङ्के काममष्टगुणितं नु तदीयम् ॥ ९७ ॥

आत्मनोऽतिसविधस्थितिशालि प्रोन्नतं स्तनतटं न्विव दृष्ट्वा ।
जायते किल मनोऽपि नितान्तं प्रोन्नतं सपदि यौवनवत्याः ॥ ९८ ॥

प्रेयसो बहुहठेन रतार्थे कञ्चुकी घनमुरोजनिवीता ।
सुभ्रुवा चिरमपास्यत कृच्छ्रात्तावती हि निजह्रीरिव शिष्टा ॥ ९९ ॥

प्रौढयोषिदिह यौवनदृप्ता नम्यते भगवतीव नु काचित् ।
स्वात्मनि स्तनमिषादुभयं या विश्वगोलकपुटं नु बिभर्ति ॥ १०० ॥

एताः सुधाब्धिलहरीसहोक्तयः[1] स्तनशतोक्तयो मधुराः ।
श्रीहरिवल्लभकविना गीताविद्वद्भुवैकमुदे ॥ १०१ ॥

इति श्रीकविमल्लभट्टहरिवल्लभकृतिषु कामकुङ्कुमपञ्चपरपर्याया-
कान्तावक्षोजशतोक्तिः पूर्णा ॥



---

1 सुधाब्धिलहरीभिः सह उक्तिः कथनं प्रकृते सादृश्यवचनमिति यावत् सा यासां ता इत्यर्थः.

## अथ

# श्रीकविमल्लभट्टहरिवल्लभरचिताः

# शृङ्गारलहर्यः

### श्रीहरिर्जयतितराम् ।



यस्त्यक्त्वागारकार्या व्रजनिखिलवधूः प्राग्गृहीत्वैव चक्रे
किञ्चिद्वंशस्य खण्डं दधद[1]थ तु पुनः क्षेप[2]णीं सोऽधुनैषः ।
वे[3]त्स्यत्यस्मासु धूर्तः कथमिति यमुनानावि भीत्यालपन्तीः
पश्यन् काश्चिद्विदग्धाश्चिरमवतु युवा देवकीनन्दनो वः ॥ १ ॥

चे[4]द्यूयमभ्ये[5]थ यथास्थिता नो तदाह्वयाम्यत्र तटस्थितान्नॄन् ।
एवं भिया यो यमुनाम्बुनग्ना व्रजस्त्रियोऽह्वास्त हरिः स पायात् ॥ २॥

यद्दर्शनार्थमद्याऽपि मच्चक्षुर्यतते भृशम् ।
पातु वो मोहिनीरूपं शौ[6]रेस्तद्रुद्रवाञ्छितम् ॥ ३ ॥

हर्म्यारूढनवीनवारललनानेत्रोद्गमं घूर्णय-
ञ्शृङ्गाराचरणप्रगल्भसुदृशामालस्यमु[7]च्चूर्णयन् ।
व[8]स्तुव्यापृतपण्यवीथिवणिजां संपादनं पूर्णयन्
यूनामस्तु मुदे प्रदोषसमयः कामागमं तूर्णयन् ॥ ४ ॥

कालिन्द्याः परिरूढपङ्कज इव स्वच्छप्रवाहो महान्
नागानामिव भूतिभूषितवपुर्विभ्राजितानां गणः ।
रन्ध्राविष्टकलानिधिप्रभ इव न्यग्रोधभूमण्डलो
नक्षत्रावृत एष भाति नितरां नाक[10]प्रदेशो निशि ॥ ५ ॥

---

१ किञ्चिद्वंशखण्डग्रहानन्तरम्. २ लम्बतरो नावौहको वंशादिदण्डः क्षेपणी. ३ आचरिष्यति. ४ यूनः कृष्णस्य अभिप्रायज्ञाः. ५ इण् गतावित्यस्य मध्यमपुरुषबहुवचनम्. ६ समुद्रमन्थने पीयूषकुम्भं देवानेव पाययितुं भगवता विष्णुना मोहिनीरूपं धृतं शिवश्च तां कामयतेस्मेति पुरातनं वृत्तम्. ७ सुवसनापरिधानभूषणायोजनरूपं. ८ तत्तद्वस्त्रादिकं क्रेयं वस्तु. ९ कुमाई. इ. प्र. १० आकाशप्रदेशः.

रजतस्तबकशबलिता रात्रिवधूस्या विनीलशाटीव ।
उदितसकलतारेयं गगनतटी शोभते विमला ॥ ६ ॥
संभोगार्थमुपेतस्य भर्तुश्चन्द्रस्य संगमात् ।
रात्र्यङ्गना पुलकिता[1] तारकाकपटेन किम् ॥ ७ ॥
विदितगगनजन्म प्रौढजाग्रत्प्रकाशं
क्षितिविलसितकान्तिक्रान्तसंसारचक्रम् ।
धृतकपटहिमत्वं[2] शुभ्रभावैकभाव्यं
जयति किमपि तेजः शार्वरोद्द्योतरूपम्[3] ॥ ८ ॥
शिशिरकिरणाख्योऽयं वृत्तो बृहत्तरहीरकः
प्रतिदिनकलाहानिव्याजात्सुरैर्दिवि खण्डितः ।
विविधशकलस्तोमस्तस्योच्छलच्छविमण्डितः
स्फुरति पतितो विष्वक् चञ्चद्द्युतिग्रहकैतवात् ॥ ९ ॥
नित्यं लाञ्छनदम्भतः शिवशिरःशृङ्गारकोऽयं शशी
संभोगामृतदायिनीमुरसियद्रात्रिं बिभर्ति स्त्रियम् ।
तन्मन्येऽनुकरोति कौतुकवशात्तामर्धनारीश्वर-
प्रख्याताद्भुतसाहचर्यसुषमां[4] यूनोर्हि या संमता ॥ १० ॥
प्रतिभान्ति समिद्धतारका दिवि यात्यस्तगिरिं दिवाकरे ।
किमु सूच्छलिताः सुरापगाविमलाम्भोविलसत्कणा इव ॥ ११ ॥
सोममण्डलमिदं समुदीतं काचकोशसदृशत्वमुपैति[5] ।
लाञ्छनं स्फुरति किञ्च यदस्मिन्कज्जलोपमितिमेति हि तच्च ॥ १२ ॥
पातुं वारि वनस्थलीषु वदनं न्यक्कुर्वते रौहिषा[6]
वक्त्रं दर्पणविभ्रमाद्विदधते नीचैः क्षितौ बालकाः ।
मुग्धा भ्राम्यति दीपिकां शमयितुं कान्तेन विस्मायिता[7]
यस्मिन् व्योमतलं गते विलसितः सोऽयं कलानां निधिः ॥ १३ ॥

---

१ विचित्रायाः स्त्रिया विचित्र एवं पुलकः. २ अमृतोपाधिकं चन्द्रे हिमत्वं. ३ चन्द्ररूपं. ४ सुषमा परमा शोभा. ५ लालूटेण इ. प्र. ६ मृगाः. ७ अत्र तव दृश्यमानो दीपश्चेत्स शमयितव्य इति.

ये निर्वेष्टनतेक्षिताः[1] कशिपवस्ते[2] भान्ति संवेष्टिता
निर्णीतं[3] किल चन्द्रकान्तमणिभिः शैले हिमं प्रस्नुतम् ।
दृष्ट्वा स्वां प्रतिमां त्रसन्ति सहसा दस्युभ्रमान्मानवा
यस्मिन् व्योमतलं गते विलसितः सोऽयं कलानां निधिः ॥ १४ ॥

कासारस्य तटोपरिस्थितबकैर्मात्स्यं[4] शनैर्वेक्ष्यते
भित्तिं न श्रयते जनः स्नुतसुधागात्रप्रसङ्गभ्रमात् ।
[5]दूराद्भाति तरङ्गिणी तटपरिच्छिन्नप्रमाणोज्झिता
यस्मिन् व्योमतलं गते विलसितः सोऽयं कलानां निधिः ॥ १५ ॥

किं कुन्दानां परागः प्रसरणतरलो वायुनास्तीर्यतेऽयं
चेष्टन्ते विष्वगेते किमुत नवनवाः पल्लवाः कैरवाणाम् ।
किं वैष क्षीरिवृक्षैः[6] क्षतजनितरसः क्षिप्यतेऽन्योन्यमेवं
मालाकाराङ्गनाभि[7]र्विपिनभुवि चिरं चिन्त्यते चन्द्रिकेयम् ॥ १६ ॥

नौकावच्छिबिका[8]दिकं क्वचिदपि च्छाया च शैवालव-
न्निर्गच्छज्जनता तरद्[9]दुपलच्छेदाश्च शम्बूकवत् ।
ऊर्मिक्षिप्ततटस्थकोकनदवद्वेश्माग्रभूदीपका
यस्यां सा तटिनीव भात्यनुपथं द्योतोदका[10] कौमुदी ॥ १७ ॥

[11]स्नेहो यामवलम्ब्य वृद्धिमयते यस्याः परं जायते
संसर्गेण विदग्धता[12] ज्ञपयते याऽनङ्ग[13]मप्यञ्जसा ।
विष्वक्प्रोज्ज्वल[14]मालयं च कुरुते विद्योततेऽहर्निशं
तेजोऽक्ष्णोर्मुहुरीक्षिता वितनुते[15] सा दीपिकेवाऽपरा ॥ १८ ॥

---

१ अन्यवस्त्रोपदेहाः. २ तूलास्तरणानि. ३ चन्द्रकान्तस्रवे हिमस्रवधीरिति भावः ४ शफरसमूहम्. ५ तदा नद्या महान् पूरो दृश्यते. ६ राजादनमुखैः. ७ पितृगृहादागताभिर्नवाभिः.

आक्षिप्तौपम्योऽत्र श्लिष्टपदोऽनुक्तहेतुकश्च तथा ।
अर्थोऽलङ्कारोऽस्ति व्यतिरेकाख्यो मम श्लोके ॥ १ ॥

८ शिबिकोपलक्षितरथादिकम्. ९ तरन्ती इव. १० प्रकाश एवोदकं यत्र. ११ तैलादिकं प्रणयश्च. १२ विदाहविशिष्टता चातुरी च. १३ अस्फुटं वस्तु कामं च. १४ गृहस्थानां गृहे स्त्रियैवौज्ज्वल्यम् शोभा. १५ लौकिकी दीपिका मुहुरीक्षिता नेत्रे निस्तेजसी करोतीति प्र.

यस्या हेमन्तरात्रिः समुचित[1]समयो व्यतिरेको[2] च मात्रा
सौत्म्यं[3] शृङ्गारवृत्ति[4]र्धवलपटलसत्तल्पसेवाऽनुपानम् ।
वोढुं लोकैः[5] प्रगल्भः परिचरणभृतिं मन्मथातङ्कशान्त्यै
यूनां दिव्यौषधी सा प्रतिभवनमियं ब्रह्मणा[6] स्त्रीति सृष्टा ॥ १९ ॥

क्लिद्यत्केशर[7]पत्रपीतपरमस्फीताङ्गकान्त्युज्ज्वला
चञ्चच्चञ्चललोचना स्तनभरव्यानम्रकम्रोदरा[8] ।
चातुर्यप्रचुरोक्तितर्षितयुवस्वान्ता सदाऽलङ्कृता
कस्येयं गृहदेवता[9] विहरते स्वच्छन्दमत्रागता ॥ २० ॥

नेयं मुग्धवपुः स्थिता नववधूः किन्त्वस्ति काचिल्लता
नो चण्डातक[10]मेतदस्ति विपुलं किन्त्वालवालं महत् ।
किञ्चैतान्यपि न सितानि विकसत्पुष्पाणि किन्त्वग्रतो[11]
नैतच्चञ्चति पाणिपादमभितः किंतु स्फुरन्ति च्छदाः ॥ २१ ॥

काँश्चिद्दर्शनतो हि काँश्चन वृथा संलापमात्रादथो
काँश्चित्कार्यनिदेशतः सकृदपि स्मृत्यैव काँश्चित्पुनः ।
काँश्चित्संनिहितस्थितेरपि पुनः काँश्चित्तु मन्दस्मिता-
त्प्रीणन्त्यब्जदृशः परन्तु विरलान् धन्यान्दृढा[12]लिङ्गनैः ॥ २२ ॥

[13]नीलाब्जाढ्यां सकलधरणिं कुर्वती दृष्टिपातै-
र्वेन्धभ्रष्टैस्तिमिरविततिं प्रेक्षयन्ती च केशैः ।
शैलद्वन्द्वं वियति सहसा संसृजन्ती स्तनाभ्यां
मन्दं मन्दं पुरत इह मे केयमायाति धन्या[14] ॥ २३ ॥

---

१ उचितत्वमन्योपद्रवाकरणेन शनैः शनैस्तद्याविहरणेन च. २ सा नखशिखशोभिनी एकैव पाणिगृहीती. ३ पथ्यं. ४ आरामविहरणादिका. ५ प्रतीकारस्य वाग्भटे चतुष्पदिकोक्तेरत्र लोको गृहवर्तिजन एकविधः पादः. ६ संहिताकारेण प्रथमेन चतुर्मुखेन जगदेकवैद्येन. ७ केशरपत्रवत् कुङ्कुमपत्रवत्पीतं. ८ कम्रं सुन्दरं. ९ गृहस्य देवतेव देवतेति मध्यमपदलोपी समासः. १० लहंगा इ. प्र. स्त्रीवस्त्रं तदिह महावैपुल्यरमणीयं भवति. ११ अस्य विकसदित्यत्रान्वयः. १२ इदमेकमेव मुख्यं सत्यं प्रणयप्रकाशकं. १३ अत्र धरण्यादीनां कर्मणां दृष्टिपातादिभिः करणैरभेदः. १४ हृदयद्राविणी.

रागं वीक्ष्य विपक्षचोलफलितं हस्ताग्रयोर्मे नवं[1]
स्तब्धोष्ठं वदनं विवर्त्य सहसा यान्त्या शनैर्मूकया ।
आः कस्या असि वल्लभस्त्वमधुना का नाम कान्ता[2] च ते
हा हा हृत्फलके व्यलेखि किमिदं दृग्लेखिनी[3]तस्तया ॥ २४ ॥
आदौ हन्त विलोकिताऽपि बहुशो ज्ञाता च या सर्वथा
नीत्वा किञ्च दिनान्तराणि कतिचिद्या विस्मृतासीदपि ।
तस्या एव विलक्षणां पुनरहो श्रुत्वाऽथ कांचित्कथां
चेतस्तां परिचेतुमिच्छति चिरं जात्वप्यदृष्टा[5]मिव ॥ २५ ॥
दूरादङ्गितले मम स्वशिरसश्छायां विधत्ते[6] मुहु-
र्नानाधा मुरलौ च गायति भृशं मन्नामगीतीः[7] पथि ।
कुञ्जे याहि दृशेति वक्ति गदितुं नाहं च शक्ता ह्रिया
नित्यं मामिति बाधते सखि हरिः कुर्यां कृतिं कामहम् ॥ २६ ॥
प्राणेशं स्नापयन्ती परपुरुषकृतक्ष्वेडितप्रेरिताक्षि-
व्यावृत्तिध्वस्तहस्तस्थितकलशपतत्तोयधारावधाना ।
हारा[9]वन्योन्यरुद्धावथ दयित तयोः शोधनेऽसीति काचि-
च्चित्तं हन्त त्वदीयं सपदि कुह रुषा तेन पृष्टेत्थमूचे ॥ २७ ॥
पूर्वं यद्यपि सेविता चिरतरं पश्चात्क्वचित् प्रस्थिता
किञ्च प्राप्तवती द्रुतं कतिपये कालान्तरे कामिनी ।
नेत्राणां च तथापि तत्क्षणमहो संभोगलीलाकृते
प्रेमाढ्ये वितनोति भर्तृहृदये साऽभूतपूर्वोत्सवम् ॥ २८ ॥
कं[10]रमुकुरधृतेः किं संभृतौ ते कपोला-
विति हि गदति लोकस्त्वां तु वृत्ताननेति ।
प्रियसखि शृणु किञ्चित्संभृतौ मे कपोला-
विति हि गदति लोको मां च लम्बाननेति ॥ २९ ॥

---

१ नवत्वात्फलनसंभावना. २ मद्रूपा. ३ रूक्षं पश्यन्त्यास्तस्या दृशावेव ले. ४ असंभवाम्. ५ तादृगुत्कण्ठामाहात्म्यमेतत्. ६ नमःसूचनाय. ७ वर्णनपराः. ८ चातुर्यं प्रेक्ष्यं. ९ स्वस्यापि क्ष्वेडितश्रुतेः. १० सख्योः कयोश्चिदुन्नीतप्रश्ना सूक्तिरियम्.

अग्रे सञ्चरितुं प्रियस्य यदसावेकाकिनी नेहते
वक्तुं रात्रिकथां सखीभिरुदिता स्मेरा च गुध्नाति[1] यत् ।
किंचित्त्रस्यति सर्वतश्च निलये यच्छङ्कितेवात्मभू[2]-
रित्युद्योगे[3]ऽपि तत्पुनः स शिथिलः किं बालमैत्रीभिया ॥ ३० ॥
कामोन्नृत्तप्रणयविकले[5] चित्रपट्टावृताङ्गीं
दोर्भ्यां किं त्वां न वदसि मयीत्यभ्युदीर्योपगूढे ।
यद्यप्यासीत्सकलमपि तत्सुभ्रु चित्रं विभग्नं
गाढं त्वासील्लिखितमहहो मानसे तत्क्षणं हि ॥ ३१ ॥
तारुण्यं हर्म्यवासो विषयरसिकता काव्यपाठश्रुतिश्च
प्रागल्भ्यं स्वापतेयं हृदि सहजसुखं मित्रकेलिश्च गानम् ।
निःसापत्न्यं प्रभुत्वं किमु गणनकृतेरानुकूल्यं यथेष्टं
हे कान्ते हा विना त्वां सकलमिति मया व्यर्थमेव प्रतीतम् ॥ ३२ ॥
आचित्रिताः पङ्किलरङ्गपत्र्यां[7] भान्त्यङ्घ्रिहस्ताङ्गुलयस्तरुण्याः ।
बालार्कतापच्छुरितानि फुल्लपङ्केरुहीयाणि यथा दलानि ॥ ३३ ॥
संश्लिष्टचोलौ कनकाङ्गदाढ्यौ नानाविभूषा[8]चितचारुचूडौ ।
सालक्तकौ रत्नमयाङ्गुलीयौ कान्ते करौ यौवनकंदलौ ते ॥ ३४ ॥
सुगाढकूर्पासकरश्मिकृष्टौ वक्षोरुहौ प्रौढनितम्बिनीनाम् ।
शृङ्गारसिन्धौ तरणाय मन्ये धात्रा निबद्धे इव तुङ्गतुम्बे[9] ॥ ३५ ॥
स्त्रीणां वयोरूपपटुत्ववस्त्रभूषाविलासोक्तिगतादि सर्वम्
पुंसां परप्रीतय एव बोध्यं भोग्यं हि भोक्तुर्विदधाति तृप्तिम् ॥ ३६ ॥
सीमन्तिनीनां पुरुषायितेषु प्रालम्बिका[10]लोलसरादधन्ते ।
प्रसूनबाणस्य सलीलवेल्लद्दोलासमालम्बिगुणोपमानम् ॥ ३७ ॥
वध्वाः प्रियप्रत्तरदक्षतानां चकास्ति चक्रं विमले कपोले
नवोदितं मण्डलमम्बुवाहे पीयूषरश्मेरिव शारदीये ॥ ३८ ॥

---

१ गुध रोषे. २ कामः. ३ परिचयकृतिपरोऽपि. ४ एतेन नायिकाया मौग्ध्यविशेषः स्तोको वर्णितः. ५ मयीत्यस्य विशेषणमिदं. ६ विचित्रं वृत्तं हृदये सदा तिष्ठति. ७ मेंहदी. ८ देशभेदाद्भूषणानां नानात्वम्. ९ तुम्ब्याया इमे फले. १० हारविशेषः.

युवजननयनजवनहयविनयनकुशला कशेव परिलसति ।
अलकलता मृदुलानिलविवलनललिता विलासिन्याः ॥ ३९ ॥
पश्यन्ती विनिमेषं दयिताभिमुखं वधूश्चिरं दूरात् ।
[1]मन्ये कटाक्षपथतः शनैः शनैस्तं समाह्वयति ॥ ४० ॥
प्रियनिकटे गुरुजनगा [2]गायन्ती ह्रीप्रकम्पमानाङ्गी ।
आन्दोलन्तीव ललत्यानन्दान्दोलने बाला ॥ ४१ ॥
आरूढयौवनायाः सुसंहता रोमराजिरुल्लसति ।
पदशृङ्खलेव गलिता मानसमग्नस्य कामनागस्य ॥ ४२ ॥
[3]मङ्क्तुं गता समभवं जाता सखि हन्त मग्नैव ।
हन्त यदि न सममङ्क्ष्चं सुनिश्चयं तर्हि सममङ्क्ष्चम् ॥ ४३ ॥
चञ्चलविलोचनायास्तदुदञ्चितमञ्चलं मुदेवोऽस्तु ।
यत् कतिचन शुचिचरिताँल्लोचयते चन्द्रचू[4]डयुगम् ॥ ४४ ॥
रत्युन्मुखौ युवानौ प्रस्वेदव्याप्तविग्रहौ लसतः ।
पूजारम्भे विहितस्ना[5]नाविव मदनदेवस्य ॥ ४५ ॥
को दोषः केतक्या हतकाया ईदृशी हि वि[6]ख्यातिः ।
यदियं हित्वात्मीयं परस्य चित्तं धिनोतीति ॥ ४६ ॥
अरुचिकरं खलु न किमपि तरुणीसम्बन्धि यद्भवत्येव ।
तत्र सतीवरदानं [7]मदनकृपां वा ब्रुवे हेतुम् ॥ ४७ ॥
प्रपतन्त्यो नीचैरिव धाराः शृङ्गार[8]वारियन्त्रस्य ।
भान्ति वधूट्या जूटी[9]बन्धच्छुटिताः कचश्रेण्यः ॥ ४८ ॥
[10]उच्चैर्निशि चन्द्रमसं नीचैः पद्मं दिवा विलोकयता ।
तस्या हठादपि मया कथं नु विस्मर्यतां वदनम् ॥ ४९ ॥

---

१ एतेन नायिकायाः प्रियविषयकं निर्निमेषं सुचिरं निरीक्षणं संभावितम्. २ देशाचारोऽयम्. ३ सरसमाभाणकमेतत्. ४ सनखक्षतौ स्तनौ. ५ स्नानं प्राक् पूजाया अवश्यम्. ६ परोपकारी केतक इ. प्र. ७ तद्वरदानतत्कृपामन्तरादुर्घटमिदं न संभवति. ८ कृष्णस्वरूपः शृङ्गारः स्थितमिदं शास्त्रे. ९ केशवेशो जूटीबन्धः. १० उपमामिलिता स्मृतिरत्रालङ्कारः.

अञ्जनमाञ्जि वधूभिर्युवदृग्दोषप्रशान्तये स्वाक्ष्णोः ।
प्रत्युत शतगुणितं तद्दोषं तत्र प्रसञ्जयांचक्रे ॥ ५० ॥
अधरद्वयमुद्घटितं शुक्तिपुटद्वयमिवाब्जनयनायाः ।
रेखा किंच रदानां सरीव परिलसति मुक्तानाम् ॥ ५१ ॥
मालाकारसुताया वपुषि विलासा यदापि नो सन्ति ।
सन्त्येव तथापि करे मालानां नृपपथे क्रयाय धृतेः ॥ ५२ ॥
स किमपि वक्तादिह यो व्याख्यानं दातुमाख्यातः ।
परदाराः संगम्या उत्कृष्टः परपदार्थश्चेत् ॥ ५३ ॥
रत्नेषु यथा रोचिर्यथा च गन्धः प्रसूनेषु ।
आस्वादो भोज्येषु स्त्रीणां गात्रेषु लावण्यम् ॥ ५४ ॥
निजनिधनसमय एव प्रदृश्यते या परैरनावरणा ।
सीमन्तिनीं सुचरितां कृपाणिका किल विडम्बयति ॥ ५५ ॥
रूपद्रव्यविलुण्ठनभयादिवामूः पुरो यूनाम् ।
त्वरितं प्रयान्ति संवृतवदनकुचाद्यखिलविग्रहा बालाः ॥ ५६ ॥
यत् परिधत्ते युवतिः सकलेष्वङ्गेषु भूषणश्रेणिम् ।
जाने तज्झषकेतोः कोऽपि भटः प्रहरणानि बध्नाति ॥ ५७ ॥
वक्षोजयोः पुरस्तादन्वक्षं किल नितम्बयोरुभयोः ।
सत्यपि पुरुपीनत्वे सातु कृशाङ्ग्येव चित्रमिदम् ॥ ५८ ॥
स्वैरमियं पथि यान्ती मुग्धा तरुणिमवलेपदुर्ललिता ।
अन्यन्मुष्टिमितं द्राक् संप्रति वर्धिष्यमाणेव ॥ ५९ ॥
श्रीमान् पुरु प्रसिद्धो नारीणामथ नृणां च नगरस्य ।
अद्य परस्परमास्ते परं विचित्रः स्वयंवरावसरः ॥ ६० ॥
प्राणप्रियासमागमविपयकसंवेशनक्रियाहरणम् ।
जागरणमपि ह हरहर शृणुत विरहिणां रिपूभूतम् ॥ ६१ ॥

१ सौन्दर्येण अत्यन्तदृगावर्जकत्वात्. २ लडी इ. प्र. ३ नृपपथो हि तासां विलासशिक्षणशाला. ४ इत्येतद्वक्तुर्मतम्. ५ स्फुटाक्षी. ६ कामस्य. ७ लक्षणासमन्वयात्. ८ स्पष्टमिदं विशेषणार्थज्ञानात्. ९ नगरोत्सववर्णनमिदम्.

विरहावसानकाले दम्पत्यो रोदनं मिथो मिलतोः।
भाति हृदयकालुष्यप्रक्षालनमिव जलैरक्ष्णोः ॥ ६२ ॥
यदपेक्षया न बिभ्यति पतिव्रताः पतिषु संनिमीलत्सु[1]।
प्रत्यक्षादग्नेरपि विरहाग्निं तदति दुःसहं मन्ये ॥ ६३ ॥
अधोरुकं[2] युवत्याः पार्ष्णिप्रतिहन्यमानमभियान्त्याः।
समधिक्षिपतीव पदौ सेवितुमुपयान्ति लोकचित्तानि ॥ ६४ ॥
लावण्यकोशगृहत्तां दधतौ कामस्य तन्वि कुचौ।
मुद्रां चूचुककपटादमुना विहितां किमु श्रयतः ॥ ६५ ॥
एषोऽस्ति कमलमुखि तव चरणाङ्गुष्ठः समुन्नतो[3] यावान्।
चित्तस्य सपदि कथयति समुन्नतिं[4] तावतीमेव ॥ ६६ ॥
मानिनि[5] षट्पदमाला चम्पकमुकुले स्थितिं न पुष्णाति।
त्वदलकमिषेण सेयं कथं कपोलेऽस्ति तत्तुल्ये ॥ ६७ ॥
समयेऽस्मिन् रन्तुमहं न समर्थास्मीति काऽपि बोधयति।
आगच्छामि सखि क्षणमिह तिष्ठेति[6] प्रियं वचसा ॥ ६८ ॥
प्रत्यपकृतिं ग्रहीष्ये समुपेष्यति यदि स वञ्चकस्तस्मात्[7]।
अथ रममाणे दयिते हरिणाक्षी तस्य विस्मरति[8] ॥ ६९ ॥

वदनपद्मनवीनतरस्फुरद्दरदलन्मुकुलायितलोचने।
उपवनं कुरु नूपुरझञ्झणैः सितगरुन्निनदैर्[9]मुखरीकृतम् ॥ ७० ॥
पश्यतः पुरुविकासितनेत्रं नायकस्य पुरतो नववामा।
संप्रवेष्टुमिव चेतसि[10] शीघ्रं संकुचत्यतितरां सकलाङ्गैः ॥ ७१ ॥
सुन्दरी बहुसमञ्जसमाञ्जीद्[11]ञ्जनं नयनयोर्मुकुराग्रे।
चित्रमाशुतरमेव च पर्युन्मीलिते[12] बत दृशौ मम जाते ॥ ७२ ॥

---

१ कालधर्मं प्राप्तेषु. २ यस्य घाघरा इ. प्र. ३ प्रायो युवतीनामुपविष्टानां चरणाङ्गुष्ठो विलासदर्पादिव उन्नतो भवति. ४ गुरुमानम्. ५ प्रसिद्धमिदं लोके. ६ नाहमेकाकिनीति भावः. ७ मुधाभाषणरूपापराधी. ८ आनन्दाधिक्यात्. ९ रूपकैर्हंसशब्दैः. १० दुष्प्रवेशे हृदि. ११ यथाविधीत्यर्थः. १२ तन्निरीक्षणानन्दार्थं स्थिरे इत्यर्थः.

असतीजननेत्राणां केयं नाम चमत्कृतिः ।
अपाङ्गा[1] अपि यासां यच्चाचल्यन्ते निरन्तरम् ॥ ७३ ॥
कपोलौ कमलाक्षीणां रुचिरौ गौरकान्तिभिः ।
अधीनीकृतये यूनां कार्मणौ[2] दर्पणाविव ॥ ७४ ॥
कामं हृदि व्यञ्जयतोः पुंसां नेत्रप्रदीपयोः ।
कुतूयुग्ममिवालोकहेतुः कान्ताकुचद्वयम् ॥ ७५ ॥
उन्नता[3] या स्तनद्वन्द्वान्नता च त्रपयैकया ।
चतुष्टयेऽध्वनां लक्ष्या दुर्लक्ष्याप्यहह त्रिके ॥ ७६ ॥
नकारोक्त्या क्वचित् काले नूनं प्रीणन्ति[4] यया स्त्रियः ।
आश्चर्यं[5] हा क्वचित्काले दहन्त्यपि तयैव च ॥ ७७ ॥
मुखावगुण्ठनपटीमध्यप्रेङ्खितलोचनाः[6] ।
लक्ष्यन्ते सरसर्वस्वं रक्षन्त्य इव योषितः ॥ ७८ ॥
करेणुशुण्डापूर्वार्द्धपीवरोरुमनोरमाम् ।
लीलालसं चलन्तीं तां दृष्ट्वाऽहमचलो[7]ऽभवम् ॥ ७९ ॥
विभान्ति विभ्रमास्ते ते युवतीनां दृगाश्रयाः ।
तरङ्गाः परिरिङ्गन्तो लावण्याम्बुनिधेरिव ॥ ८० ॥
मरुदेतीति पतिना व्याहृता मुग्धिका रते ।
अन्यभ्रान्त्यानु रुरुधे संभोगोत्कं तमाशु सा ॥ ८१ ॥
एषा समन्ताद्गगनान्तराले विद्योतते हन्त शतह्रदाली ।
वियोगिनां प्राणसमुत्क्रमार्थं रतिप्रभोर्दन्तविभीषिकेवं ॥ ८२ ॥
धरणिगगने नाम कौचित् पृथू किल जम्पती
न घनकृतसूर्याच्छादोऽयं पराऽनवलोकनम् ।

१ अपगतानि अङ्गानि येषां ते दृक्प्रान्ताश्च. २ वशीकरणाय मन्त्रितौ. ३ स्तनाभ्यां उन्नता त्रपया नता अध्वचतुष्टये लक्ष्या त्रिके मध्यदेशे दुःखेन लक्ष्या इति विचित्रः सरसः क्रमः. ४ स्वीकरणार्थज्ञानात्. ५ सर्वैकार्थज्ञानात्. ६ तद्विलासनिरीक्षणार्थमिति भावः. ७ तेन कामे कौशल्यं रूपितं ज्ञेयम्.

वहति न जलं चैतद्वीर्यं तयोश्च्यवते रता-
विदमपि न वानस्पत्यं[1] संततिव्रजसंभवः ॥ ८३ ॥

झङ्कारैर्मक्षिकाणां बधिरितगगनैः पूरयन् स्थानगर्भं
सौभिक्ष्यं दैन्यवद्भ्यो भृतनिभृतसुखं सूचयन् मानुषेभ्यः ।
आरामक्ष्मोप्तबीजप्रथमविकसनं[2] भालयन्मालिकेभ्यो
वर्षाकालोऽभ्युपेतः सरणिषु चलतां पान्थयूनां विपन्थी[3] ॥ ८४ ॥

द्विजाधिराजो विजहाति जायां ध्वान्तापरासक्तविहारबुद्धिम् ।
कुलानुकूलव्रततत्परा नराः परानुरक्तां रहयन्ति योषितम् ॥ ८५ ॥

तारा मध्यच्छितार्याः स्रज इव मणयः प्रच्यवन्ते समन्ता-
देकीभूयोपरिष्टाच्चितमिव तिमिरं व्योम्नि नैल्यं चकास्ति ।
आशानामन्तरालं मुकुरतलमिव स्वच्छभावं च धत्ते
कश्चिन्माणिक्यवारां प्रवह इव ततिं याति सान्द्रः प्रकाशः ८६

उद्योगिभ्यः प्रबोधं कृतविविधविधिं कारयन्निर्विलम्बं
पान्थेभ्यो गोपुरेष्वप्रतिहतगमनं बोधयन् राजधान्याः ।
सौभाग्यं भूमिभर्तुः सकलविषयगं सूचयन्नागरेभ्यः
प्रातस्त्यस्तोपघोषः प्रचुरचिररयः सर्वतः श्रूयतेऽयम् ॥ ८७ ॥

यस्मिन् कर्मणि जीवनिर्गमभयं कार्यं न केनाऽपि तत्
तस्मात्कुक्कुट किं वृथैव तनुषे प्राभातिकं पैशुनम् ।
साशङ्कं दयितोपगूहनसुखं स्तोकं भजन्त्यः स्त्रियो
यन्नैवं विविधप्रकारकृतिभिस्त्वां घातयिष्यन्त्यमूः ॥ ८८ ॥

दूरे गच्छति सत्वरं कथमपि प्रोद्दामभीत्याकुला
हृत्वा तारकमौक्तिकानि सहसा रात्रीत्यसौ चौरिका ।
सर्वे संप्रति मानवा इति चिरं कोलाहलोन्निद्रिता
ज्ञाप्यन्ते किमु कुक्कुटैः पथि पथि प्रत्येकगेहं मिथः ॥ ८९ ॥

---

१ वनस्पतीनां वृक्षाणां समूहो वानस्पत्यम्. २ अङ्कुरीभवनम्. ३ प्रतिकूलः. ४ मध्ये त्रुटितायाः. ५ सूर्योदयसंध्यारूपः. ६ स्वत एव तासां रात्र्यपायज्ञानं तस्मात्.

या: पूर्वं कठिनस्वभावनियमप्रारब्धमानाकुला:
  कान्तैश्चाथ बलात्कृतेरनुमतिं नीत्वोपगूढाश्चिरम् ।
पश्चाद्धन्त शनैः शनैः स्वविरहं तैर्लम्भिताः सांप्रतं
  [१]तत्कण्ठाहृतपाणिसंभ्रममतेर्मुह्यन्त्यमूस्ताः स्त्रियः ॥ ९० ॥

श्रुतियुगलमकस्माच्छ्रोतुमीषत्प्रवृत्तं
  सकलमपि च दृष्टी वीक्षितुं वस्तुजाते ।
अथ च विविधगन्धो नासया [२]घ्रातुमीषे
  निखिलकरणमित्थं सावधानं [३]बभूव ॥ ९१ ॥

विलसति सकलाशाहासपिण्डेऽर्कबिम्बे
  त्यजति निबिडनिद्रां जीवलोके विशोके ।
रमयति खगवर्गं गन्धवाहप्रवाहे
  सपदि दिवसलक्ष्मीः सर्वतः प्रादुरासीत् ॥ ९२ ॥

[४]उद्याने नवमुग्धमालिकशिशुः प्रोत्फुल्लपुष्पव्रजा-
  नालोक्य क्षणदावसानपवनस्पर्शेन संबोधितः ।
आश्चर्यं स्खलिताः कथं नु निखिला एता दिवस्तारका
  एतां भ्रान्तिमसौ जहाति सहसा संघ्राय तत्सौरभम् ॥ ९३ ॥

[५]मन्दं मन्दं दिशि सुरपतेरेष कस्य प्रकाशः
  प्राप्तो भूयान्नयनसरणिं चञ्चति व्याप्य विश्वम् ।
आ विज्ञातं कथमपि मया सांप्रतं पूर्वशैल-
  प्रौढाटव्यां तिमिरयवसं दाहमेतीति बुद्ध्या ॥ ९४ ॥

प्रत्यासन्ने भगवति रवौ स्वागतं पुष्कराणि
  प्रष्टुं स्नेहादिव किमधुना वक्त्रमुद्घाटयन्ति ।
सद्यः प्राप्ते विधिबलवशात्प्रोपितेऽपि स्वबन्धौ
  [६]मित्रे वाऽपि प्रणयविवृतं कैर्मुखं न क्रियेत ॥ ९४ ॥

---

१ तेषां स्वकण्ठेषु आहृताः सञ्जिता ये पाणयस्तेषां संभ्रममतिरिदानीमपि जाने तत्तादवस्थ्यमेवेति तस्याः. २ इषेः कर्मणि लिट्. ३ प्रभातो जात इति भावः. ४ रात्रौ ताराः प्रातः पुष्पाणि इति स्थिते इदम्. ५ प्रातर्वर्णनम्. ६ सूर्योऽपि मित्रपदवाच्यः.

पूर्वं मूर्तितमात्रमेव भवनं नेक्ष्यं यथाप्यन्तिके
सौधेनैव विलेपनेन तदनु प्रद्योतितं सर्वतः ।
किञ्चित्प्रत्यवभासमानमुषसि प्राक्मन्दमन्दं पुनः
पद्माक्षेऽभ्युदिते तथेदमखिलं स्पष्टं जगज्जायते ॥ ९६ ॥

नाथे नूतनसंगमार्थमुदिते रागेण गाढादरं
प्रत्युन्नीय चुचुम्बिषत्यपि मुखं प्राक्मन्दमन्दं करात् ।
दूरे तिष्ठति मुग्धिकेव सहसाऽविस्पष्टरूपा यंती
सैषा पश्य पलायतेऽतितरला छाया पुरस्तान्नृणाम् ॥ ९७ ॥

जालीरन्ध्रपथोदितार्ककिरणान् कान्ते मुहुः पश्यति
प्रासादस्य रताधिकोदयसुखातृप्ता प्रगल्भाङ्गना ।
वातोड्डायितविस्फुरज्जवनिकाव्यक्तं किमु प्रेक्ष्यते
मुक्ताविद्रुममालिकावलयितं स्तौतीति चित्रं मुधा ॥ ९८ ॥

छायावद्भूदसीम्नि मीनकमठास्तिष्ठन्ति सर्वे मिथो
गावः स्वप्रतिबिम्बितक्षितितले स्थातुं वहन्ति स्पृहाम् ।
सांनिध्येऽपि च पाकसुन्दरफलं मुञ्चन्ति नीडोद्भवा
घ्रात्वा पुष्पसुगन्धमप्यलिगणा गन्तुं न वाञ्छन्त्यहो ॥९९॥

गायन्नव्यवधूप्रमत्तरसिको भ्राम्यच्चमूमण्डलो
हस्त्यश्वोष्ट्रगतागतो नियमितागच्छत्प्रवृत्तिक्रमः ।
तोपध्वाननिबोधितक्षितिपतिप्रत्यागतिप्रस्थिति-
र्नानाधाकथितश्रुतोक्तिनिचयः कोप्येष मेलोत्सवः ॥ १०० ॥

वर्णाकाराचरणकरणैः काकसंघप्रविष्टो
यद्यप्यास्ते परभृतशिशुर्जातमेतावता किम् ।

---

१ निर्मितमात्रम्. २ सुधा कळी इ. प्र. गृहलेपः. ३ सूर्ये. ४ गच्छन्ती. ५ स्वभावो-क्तावुत्प्रेक्षासौ ।

यस्मिन् काले श्रुतिसुखकरं पञ्चमस्यानुकूलं
  काणं कूजिष्यति स सहसा भावि किञ्चित्तदानीम् ॥ १०१ ॥
आहन्ति निभृतनिभृतं द्रुतमपसरति त्रसन्गूढम् ।
अयि मोपकोऽस्ति किमयं नहि नहि सखि मूषकः कोऽपि १०२
नाना प्रसादनानि क्रियमाणानि प्रियेण बालायाः ।
तत्सरसताकृते खलु भासन्ते दोहदानीव ॥ १०३ ॥

इति श्रीकविमल्लभट्टहरिवल्लभकृतिषु शृङ्गारलहर्यः ।



१ भेदज्ञानम्. २ छेकापह्नुतिनिदर्शनमिदम्.

अथ

# श्रीकविमल्लभट्टहरिवल्लभवर्णिता

# दशकुमारदशा ।

## श्रीहरिर्विजयतेतमाम् ।



स्तोत्रैरिन्द्रं स्वमन्योर्गिरिवरधरणे कारयन्तं तितिक्षां
देवेश प्रत्युतेदं प्रचुरमुपकृतं कोपकर्त्रा त्वयाऽद्य ।
यत्तैस्तैर्याः प्रकारैरपि न हि मिलिता हन्त गोपाङ्गनास्ता-
स्तिष्ठन्त्यभ्यर्णमेता इति समुपहसन्रक्षतु श्रीपतिर्वः ॥ १ ॥
विश्राणयन्तु प्रचुरां श्रियं वः श्रीभर्तुरङ्घ्र्योर्नखकान्तयस्ताः ।
या नूनमङ्गुष्ठपुनःप्रनिर्यत्त्रिस्रोतसो विभ्रममावहन्ति ॥ २ ॥
[1]अनूद्यते मल्लकवीश्वरेण विप्रेण पूर्वं हरिवल्लभेन ।
कुमारकाणां चरितं दशानां कौतूहलादेव निबध्य पद्यैः ॥ ३ ॥
पुरी पुरीणां निकषः परासां रत्नाकरश्रीस्ततपण्यरत्नैः ।
अस्ति स्म काचिन्मगधाख्यदेशवतंसिता पुष्पपुरीति नाम्ना ॥ ४ ॥
तत्राश्वमातङ्गझषाकुलस्य भटावलीचञ्चलदीर्घवीचेः ।
यद्बाहुदण्डौ सकलारिलोकपाथोनिधेर्मन्दरितौ प्रमाथे ॥ ५ ॥
शङ्काटवीसंनटदप्सरोभिर्जेगीयमानैर्निजसद्यशोभिः ।
विशोभितः कुन्दसुधांशुकाशकर्पूरनीहारपयःसखैर्यः ॥ ६ ॥
प्रदीयमानाध्वरदक्षिणौघसंत्रातविद्यावदनेकविप्रः ।
अर्कप्रतापो नृपतिः समस्तभूभोगभाग्योऽजनि राजहंसः ॥ ७ ॥
कन्दर्पसौन्दर्यविमर्दिकान्तेस्तस्य प्रिया सा वसुमत्यभिख्या ।
लीलावतीशेखरदिव्यरत्नं राज्ञी मनीषैकनिधी रराज ॥ ८ ॥

---

१ अर्थांशेन.

तस्याः कबर्येव मिलिन्दमाला प्रेयान् सुधांशुर्वदनं जिताब्जम् ।
जयध्वजः सञ्झिषोऽक्षियुग्मं श्वासः सुयोधो मलयानिलश्च ॥ ९ ॥
अध्वन्यहृद्भेदनमण्डलाग्रः स विद्रुमश्चाप्यधरोष्ठबिम्बः ।
लावण्यपूर्णा विलसत्स्वरूपो जयिष्णुशङ्खो मृदुला शिरोधिः ॥ १० ॥
कोकाकृती पूर्णघटावुरोजौ बाहू समज्ये च बिसव्रतत्यौ ।
क्रीडावतंसाम्बुजकुड्मलोऽथ नाभिः सनाभिर्द्युनदीभ्रमस्य ॥ ११ ॥
जैत्रः शताङ्गो जघनं घनं च रम्भे जयस्तम्भसमे तथोरू ।
पदद्वयं छत्रसहस्रपत्रं शेषाङ्गकाण्यस्त्रितपुष्पकाणि ॥ १२ ॥
यदा स्मरोऽदाहि महेश्वरेण संरम्य लालाटदृशोऽनलेन ।
समस्तवस्तूनि तदाऽस्य नूनमाश्रित्य यां पर्यणमन्भियेति ॥ १३ ॥
यथानुकूलं किल पुष्पपुर्याः पुष्पेषुणा श्रीमगधेश्वरेण ।
अनन्तभोगैः परिलालिता या समन्वभावीव मही प्रकामम् ॥ १४ ॥
पत्युर्विशांतस्य च धर्मपालः पद्मोद्भवोऽन्यः सितवर्मकश्च ।
इत्यभ्यवर्तन्त बुधा अमात्या मौलास्त्रयः शासनसंविधेयाः ॥ १५ ॥
अन्त्यस्य तेषां सुमतिश्च सत्यवर्मेति पुत्रौ सचिवस्य जातौ ।
त्रयः सुमन्त्रश्च सुमित्रकामपालौ तु पूर्वस्य सुता बभूवुः ॥ १६ ॥
मध्यस्य पुत्रावपि सुश्रुतश्च रत्नोद्भवश्चेति बभूवतुर्द्वौ ।
सर्वे त एते वयसः क्रमेण बभूवुरात्मज्ञवराः कुमाराः ॥ १७ ॥
एतेषु धर्मी बहु सत्यवर्मा बुद्ध्वा वृथात्वं जगतोऽखिलस्य ।
देशान्तरं तत्तदशेषतीर्थयात्राभिलाषाकुलितो जगाम ॥ १८ ॥
सुदुर्विनीतोपि स कामपाल उल्लङ्घ्य पित्रग्रजशासनानि ।
स्वैरं विबभ्राम भुवं समग्रां वाराङ्गनापिङ्गनटादिमित्रैः ॥ १९ ॥
वाणिज्यलाभज्ञतया व्यधासीद्रत्नोद्भवः संतरणं पयोधेः ।
शिष्टाः परे मन्त्रिसुता अतिष्ठँस्तातेषु यातेषु दिवं यथादि ॥ २० ॥
ततः कदाचिन्नृपराजहंसो दृप्तं रिपुं मालवदेशनाथम् ।
तं मानसारं बलभारनम्रीकृताहिराजोऽभिजगाम योद्धुम् ॥ २१ ॥

१ मण्डलाग्रः खड्गः. २ पिङ्गा धूर्तविशेषाः.

नासीरगम्भीरनदन्मृदङ्गझाङ्कारघोषान्हठभिन्नकर्णान् ।
मुहुर्मुहुर्धूतकरं निशम्य दिशां करीन्द्रा बलवद्व्यघूर्णन् ॥ २२ ॥
स मालवेशोपि शरीरयुक्त इवाहवः संमुखतामवाप्य ।
इतो द्रुतं सज्जितसर्वसैन्यः प्रतिप्रहर्तुं तरसा ससार ॥ २३ ॥
तयोर्द्वयोः पाणिभिरायुधैश्च मिथःसमुन्माथितयोधयूथम् ।
क्ष्वेडारवाध्मातदिगन्तरालं भयंकरं भूयजनिष्ट जन्यम् ॥ २४ ॥
नव्यप्रियाणां वरणोपयातदिव्याङ्गनान्तर्धिपटायितानि ।
रजांसि रेजुर्गगने शताङ्गतुरङ्गसंक्षुण्णधरोद्भवानि ॥ २५ ॥
आस्कन्दने मालवभूमिपालं कृत्वा वशे स्वस्य पुनः कृपालुः ।
स राजहंसो विततार तस्मै विनिर्जितं तस्य समस्तराज्यम् ॥ २६ ॥
नित्यं महेशार्चनसक्तबुद्धेरपुत्रिणो जात्वथ तस्य कान्ता ।
लभस्व कल्पद्रुफलं नृपेण प्रातः शुभं स्वप्नमिमं लुलोके ॥ २७ ॥
तदादि तां वीक्ष्य गृहीतगर्भां राजाप्युपाहूतसुहृत्क्षितीशः ।
आत्मीयसंपत्तिमनोरथार्हं चकार सीमन्तमहं महिष्याः ॥ २८ ॥
अथैकदा पीठगतं सभायां दौवारिकस्तं निविवेद नत्वा ।
देव त्वदीयेक्षणजातकामो द्वारे यतिः कश्चन तिष्ठतीति ॥ २९ ॥
निजाज्ञया तेन सनीडनीतं संप्रत्यभिज्ञातनिगूढदौत्यम् ।
विसृज्य सर्वान्सचिवान्वितस्तं निगद्यतामित्यगदन्नरेन्द्रः ॥ ३० ॥
सोऽब्रूत लब्ध्वैकवधां महार्चातुष्टान्मृडान्मालवराङ्गदां सः ।
उत्साहशाली सपदि प्रहर्तुं जितो भवन्तं पुनरभ्युपैति ॥ ३१ ॥
श्रुत्वेत्यमात्या द्रुतमेव भूपं योद्धुं रिपुर्दैवसहाय एति ।
श्रेयान् रणस्तेन समं न तस्माद्दुर्गाश्रयः कार्य इति न्यशासुः ॥ ३२ ॥
तथापि दुर्दर्शतरोत्यमर्षावेशोत्तरङ्गायितसर्वगात्रः ।
आसीद्द्रुतं वीर्यविशेषशोभी प्रहर्तुकामो मगधाधिनाथः ॥ ३३ ॥
पुरुप्रदृप्यत्पृतनाभिपृक्तः शिवप्रदत्तोत्तमशक्तिसारः ।
स मालवेशो बत मागधीयमक्लेशमेव प्रविवेश देशम् ॥ ३४ ॥

प्रहित्य विन्ध्याद्रिवनेषु मन्त्रिसान्त्वैर्विरोधान्विरलप्रगुप्तान् ।
अरुद्ध निर्गत्य सुतीव्रगत्या प्रत्यर्थिनं द्राङ्नृपराजहंसः ॥ ३५ ॥
कुतूहलोपागतखेचराणामाश्चर्यकारिण्यथ जायमाने ।
तां मानसारः समरे स्वशक्तिं पुरः समुद्दिश्य रिपुं समास्थत् ॥३६॥
वरानुभावात्परमेश्वरीयादमूमुहत्सूदितसूतमात्रा ।
तीक्ष्णैः कलम्बैः शकलीकृतापि धराधिपं स्यन्दनयोधिनं सा ॥ ३७ ॥
शीघ्रं समादाय ततः शताङ्गं यदृच्छयानाहतसर्वगात्राः ।
निष्प्रग्रहास्तन्महिषीशरण्यमरण्यमेवाविविशुस्तुरङ्गाः ॥ ३८ ॥
बली समस्तं मगधेश्वरस्य जयान्वितो मालवलोकपालः ।
देशं समाक्रम्य चिरस्य शस्यपराक्रमः पुष्पपुरीं शशास ॥ ३९ ॥
भर्तुर्विचिंत्तस्य गदाभिघातादर्शनं सर्वबलक्षयं च ।
वनं द्विपा युद्धजिताः पलाय्य प्राप्ता जजल्पुर्महिषीममात्याः ॥४०॥
उपागता मोहदशां नितान्तं कथंचन प्राप्य बत प्रबोधम् ।
चितानलान्तः स्वकलेवरस्य सद्यः प्रपातं समियेष राज्ञी ॥ ४१ ॥
दैवज्ञदृष्टस्य धरैकभर्तुर्हताखिलारेरुदरस्थितस्य ।
उक्त्या सुतस्यापदनिश्चयाच्च नरेशितुस्तां सचिवा न्यषेत्सुः ॥ ४२ ॥
अथैकदा सा विजने निशीथे शोकाकुला क्वापि गलं कुचन्ती ।
संबोध्य भूपं दयितो भवान्मे जन्मान्तरेऽप्यस्त्विति पर्यदीव्यत् ॥ ४३ ॥
तत्रैव दूरात्किल नातिदूरे प्रोत्तीर्णमूर्च्छो मगधेश्वरः सः ।
आकर्ण्य राज्याः करुणान्विलापान्क्षरच्छिरोऽस्त्रः समजूहवत्ताम् ॥४४॥
ससंभ्रमं शब्ददिशाऽभिगम्य राज्ञी चिरात्स्वामिनमीक्षमाणा ।
धरण्यधीशं सचिवान्समस्तानाकार्य संदर्शयति स हर्षात् ॥ ४५ ॥
प्रशंसितादृष्टविचित्रचेष्टो व्यचष्ट तान्क्षोणिपतिः क्रमेण ।
साष्टाङ्गपातं विहितप्रणामान्दुरन्तमात्मीयमुदन्तजातम् ॥ ४६ ॥
निवेशनीतस्य भृतव्रणस्य पत्युर्नृणां संपदनित्यतोक्त्या ।
आश्वासनं चक्रुरमात्यलोका रामादिवृत्तानि निदर्शयन्तः ॥ ४७ ॥

---

१ मूर्च्छितस्य.

राजा तपःसिद्धसमस्तकामं मुनिं ततः कञ्चन वामदेवम्।
प्राप्तातिथेयः समुपेत्य जातु राज्याभिलाषी प्रणमन्बभाषे ॥ ४८ ॥
मां मालवो दैवबलेन जित्वा निषेवते हन्त मदीयराज्यम्।
कृत्वा तपो दुस्तपमप्यहं तद्भवत्कृपातो तमरिं क्षणिष्ये ॥ ४९ ॥
श्यता शरीरं तपसा कृतं ते राज्ञी प्रसोता तनयं रिपुघ्नम्।
कालं प्रतीक्षस्व च माकुलोभूर्मुनिः क्षितीशं निरदिक्षदित्थम् ॥ ५० ॥
एतन्न मिथ्येति तदैव वाण्या व्याहार्यनीचैर्गगनं चरन्त्या।
प्रसन्नचेता अपि भूविनेता मुनेरतिष्ठद्वचनं वलम्ब्य ॥ ५१ ॥
अथ स्फुरन्मेदुरितोदराग्रा सुखोपयाते प्रसवार्हकाले।
समुल्लसन्तं शुभलक्षणौघैः राज्ञी सुतं सा वसुमत्यसूत ॥ ५२ ॥
तं ब्रह्मतेजःपरिभूतवेधसा पुरोधसा कारितजन्मसंस्क्रियम्।
बाल्योचितैराभरणैर्विराजितं नाम्ना नृपो व्याहृत राजवाहनम् ॥ ५३ ॥
अभूत्तदैव प्रमतिश्च सौमतः सौमन्त्रिरासीदथ मित्रगुप्तकः।
जनिं तथा सौश्रुतिराप विश्रुतः पुत्रान्विता इत्यपि मन्त्रिणोऽभवन् ॥ ५४ ॥
अथो कदाचित्स्फुटराजचिह्नमेकेन सर्वाक्षिकृतप्रसादम्।
कञ्चित्कुमारं सुमसौकुमारं तपस्विनाख्यायि समर्प्य राज्ञे ॥ ५५ ॥
समित्कृतेऽरण्यगतेन राजन्काप्यैक्षि दीना रुदती मया स्त्री।
किं कारणं रोदिषि निर्जनेऽत्र पृष्टेति मृष्ट्वा नयनाम्बु साऽख्यत् ॥ ५६ ॥
तनूजदारैः सह पुष्पपुर्यां प्रहारवर्मा मिथिलानरेन्द्रः।
मित्रस्य राज्ञो मगधेश्वरस्य कलत्रसीमन्तदिदृक्षयाऽगात् ॥ ५७ ॥
आराधनप्रीणितकालकण्ठं परापतन्तं सहसैव योद्धुम्।
प्रत्यग्रहीन्मालवमेदिनीशं प्राग्विद्विषं स्वं मगधाधिनाथः ॥ ५८ ॥
साहाय्यकं संविदधत्समीके सख्युर्हतप्रायसमग्रसैन्यः।
प्रहारवर्मा जयिनाऽहितेन कृपाविसृष्टः स्वपुरं जगाम ॥ ५९ ॥
नृपस्ततोऽरण्यपथेन गच्छन्पुलिन्दसेनाभिमुखो जनित्वा।
कृच्छ्रादमात्यैः परिरक्षितान्तःपुरः प्रवेगेन पलायितोऽभूत् ॥ ६० ॥

१ चक्षेरादेशरूपम्.

धात्रीत्वतो राजतनूजयुग्ममहं मदीया च सुता दधत्यौ ।
प्रधावमानं तमनुप्रयातुं नोच्छूनपादौ भवतः स शक्ते ॥ ६१ ॥
ग्रावावटे व्याघ्रभयात्पतन्त्याः करान्ममैकः स्खलितः कुमारः ।
कस्यापि दैवात्सविधस्थितस्य क्रोडे निलिल्ये कपिलाशवस्य ॥ ६२ ॥
प्रक्ष्वेडनैस्तं कुणपं कृषन्तं शार्दूलमालम्ब्य शिताग्रफालैः ।
हा हन्त कण्ठान्तरलम्बिचापा उपानयन्कापि शिशुं किराताः ॥६३॥
अप्राप्तपुत्रीं दृषदाहताङ्गीमावेश्य मां वेश्मनि मेषपालः ।
वन्योपचारैरखिलप्ररूढव्रणां कृपाक्रान्तमना अकार्षीत् ॥ ६४ ॥
तस्यैव भूयोप्यथ भूमिभर्तुः स्वस्था समीपे व्रजितुं लषामि ।
प्रवञ्चिता किं च सहायतोऽहं तथापि यास्यामि यथातथैव ॥ ६५ ॥
अहं यतीं तामवलोक्य राजँस्त्वन्मित्रपुत्रस्य गवेषणाय ।
विपन्निमित्तं कलयन्विषादं मेनात्मजामन्दिरमेकमापम् ॥ ६६ ॥
खड्गेन भूरुद्धपदं शरैर्वा द्रुलम्बितं कुक्कुरबालदष्टम् ।
एनं हतं धुर्युपहार्य देव्या लप्स्यामहे सर्वजयस्य सिद्धिम् ॥ ६७ ॥
मिथो ब्रुवाणानिति तत्र भिल्लान्समभ्युपेत्याहमुवाच वाचम् ।
वृद्धस्य मे विस्मृतमार्ग एकः शिशुर्वनेऽस्मिन् किमदर्शि भद्रैः ॥६८॥
ते दारकं दर्शितदीर्घदैन्यं दृढप्रमाणा द्रुतमेव मेऽदुः ।
स्वीकृत्य तं प्राप्तहिमोपचारमानीतवानस्मि भवत्समीपे ॥ ६९ ॥
राजाऽपि मित्रव्यसनैकहेतुं शोकं जहत्तत्सुतलोकनेन ।
आहूय हर्षादुपहारवर्मनाम्ना तमात्मौरसवत्पुपोष ॥ ७० ॥
स्नानाय तीर्थं सुकृतैककाले गच्छन्नृपः पक्कणमार्गपार्श्वात् ।
संबिभ्रतीं कंचन डिम्भमङ्के वीक्ष्य स्त्रियं कौतुकतोऽन्वयुङ्क्त ॥ ७१ ॥
न संभवत्यर्भक एष वां सु त्वद्वंशजः क्ष्मापसदृक्षलक्ष्मा ।
कस्येक्षणानन्दकरः प्रचक्ष्व निघ्नोऽभवत्केन च हेतुना ते ॥ ७२ ॥
निषादचम्वापहृतस्य पूर्वं पथाऽमुनैव व्रजतः स्वराष्ट्रम् ।
प्रोचे स्वभर्त्रा भरणाय दत्तं तं बालकं सा मिथिलेश्वरस्य ॥ ७३ ॥

१ उपमातृभावेन. २ वाले.

सान्त्वेन दानेन च तोषिताया आदाय तस्याः सुहृदोन्यपुत्रम् ।
नृपोऽभिधानादपहारवर्मेत्याभाषमाणो ददिवान्महिष्यै ॥ ७४ ॥
द्विजातिरेको मुनिवामदेवशिष्याग्रणीर्जात्वपि सोमदेवः ।
शिशुं पुरस्तात्पृथिवीधवस्य निधाय कंचित्कथयाम्बभूव ॥ ७५ ॥
कृत्वाप्लवं लङ्घितरामतीर्थः प्रयानहं काननवीथिमध्ये ।
संप्राप्तनेत्राग्रसृतिं सबालां व्याजह्रिवान्कांचिदहं महेलाम् ॥ ७६ ॥
एकाकिनी माणवकं बतामुं समुद्वहन्ती स्थविरे विभीस्त्वम् ।
कस्मात्प्रयासेन विभीषणायामस्यामटव्यां परिबम्भ्रमीषि ॥ ७७ ॥
साऽख्यन्मुने कश्चिदिहास्ति कालाभिधो महान्दूरतरोन्तरीपः ।
तत्र न्यवात्सीद्बहुवित्त एकः श्रेष्ठो विशां जातिषु कालगुप्तः ॥ ७८ ॥
तन्नन्दिनीं चन्द्रमुखीं सुवृत्तां वाणिज्यहेतोः समभिप्रयातः ।
उपार्यत[1] प्रेक्षितसद्गुणश्री रत्नोद्भवो मागधमन्त्रिसूनुः ॥ ७९ ॥
तरुण्यथो तातविशेषमानसमर्चितस्वीयधवा सुवृत्ता ।
कालक्रमात्संविहितप्रपीनवक्षोजनीलाग्रमलब्ध गर्भम् ॥ ८० ॥
रत्नोद्भवः सोदरसंदिदृक्षावशात्कथंचिच्छ्वशुरं प्रसान्त्व्य ।
आरूढनौकः सह चञ्चलाक्ष्या तामञ्जसा पुष्पपुरीं प्रतस्थे ॥ ८१ ॥
नावि ब्रुडन्त्यां पयसां निधौ तां धात्री कराभ्यां दधती सगर्भाम् ।
समभ्यगां तीरभुवं प्रलम्बं यदृच्छयैकं फलकं वलम्ब्य ॥ ८२ ॥
मध्येसमुद्रं समभून्निमग्नः कुतोप्युपायादथवाप तीरम् ।
रत्नोद्भवो मित्रवृतस्तदानीं चेतामि वै किंचन नाहमेतत् ॥ ८३ ॥
क्लेशस्य काष्ठां परमां गतास्मिन्वने सुवृत्ताऽद्य सुतं प्रसूय ।
एकान्तभीता पुरगामिमार्गमन्वेषितुं मां द्रुतमादिदेश ॥ ८४ ॥
तस्याः समीपे प्रसवाकुलाङ्ग्याः शिशुं विहायानुचितं प्रयाणम् ।
इतीव तं संकसुका[2] दधाना स्तनंधयं विष्वगिह भ्रमामि ॥ ८५ ॥

१ परिणीतवान्. २ चलप्रकृतिः.

अत्रान्तरे दृष्टवनद्विपा सा शीघ्रं प्रदुद्राव निपात्य बालम् ।
वल्ल्या उपस्तम्बमहं प्रविश्य परीक्षमाणश्चिरमध्यतिष्ठम् ॥ ८६ ॥
क्षीबः करीन्द्रः पतितं पृथिव्यां शिशुं छदग्रासमिवोपगृह्य ।
अभिव्रजत्केसरिवीक्षणेन भीतो निचिक्षेप दिवोन्तराले ॥ ८७ ॥
वलीमुखः प्रांशुमहीरुहस्थः फलस्य बुद्ध्या चिरजीवितं तम् ।
आदाय दोर्भ्यां च्यवमानमभ्राद्यमुञ्चत स्वान्तिककाण्डमूले ॥ ८८ ॥
कीशः क्षणात्कापि ततश्चुकूर्दे सेहे विषादं निखिलं कुमारः ।
निहत्य नागं प्रययौ मृगेन्द्रः स्फुटोऽभवं गुल्मतलादहं च ॥ ८९ ॥
अपश्यतान्विष्य चिरेण धात्रीं मयोपनीतं द्रुमतोऽवतार्य ।
गृहाण राजँस्त्वमिमं शिशुं तं शिष्टैर्वरीवर्ति गुरोरपीयम् ॥ ९० ॥
कथं स रत्नोद्भव आप जन्म ध्यायन्निति क्ष्मापतिरद्भुतात्मा ।
विषादसंतोषकरं तमुक्त्वा पुष्पोद्भवं प्रादित सुश्रुताय ॥ ९१ ॥
अन्येद्युरेकं पृथुकं गृहीत्वा राज्ञीं प्रपन्नां निजसंनिधानम् ।
संपृष्टवान् प्रेमपरिप्लुताक्ष एषोस्ति कुत्रत्य इति क्षितीशः ॥ ९२ ॥
जगाद सा भूमिप कापि दिव्या निशीथमध्ये पृथुलेक्षणैका ।
सुनिर्भरं सद्मनि निद्रिताया ममाविरासीत्सहसा पुरस्तात् ॥ ९३ ॥
संगृह्णती बालकमंसदेशे प्रबोध्य संबोधकनिस्वनैः सा ।
ललाटसंलग्नकराञ्जलीकं कृतप्रणामेति समब्रवीन्माम् ॥ ९४ ॥
यक्षीं तवामात्यसुतस्य कामपालस्य कान्तां मणिभद्रपुत्रीम् ।
तारावलीं नाम पदोपचर्याविधायिनीं देवि मनुष्व मां त्वम् ॥ ९५ ॥
त्वदीयसूनोरिह भाविसर्ववसुन्धराधर्तुरनल्पकीर्तेः ।
सेवाकृते यक्षपतेर्नियोगादानीतवत्यस्मि शिशुं स्वमेनम् ॥ ९६ ॥
ततो मया विस्मितया नितान्तमादाय मुग्धेन्दुमुखं किशोरम् ।
विसर्जिता सत्कृतिहृष्टचित्ता साऽलक्ष्यतां तत्क्षणमेव लेभे ॥ ९७ ॥
शोचन्निजामात्यसुतस्य यक्षपुत्र्या समं संगमनं क्षितीशः ।
नाम्नार्थपालं पृथुकं तमुक्त्वा ददे सुमित्राय पुरःस्थिताय ॥ ९८ ॥

जात्वेकदा कश्चन वामदेवशिष्यो द्वितीयस्तपसाऽद्वितीयः ।
एकं कुमारं परिभूतमारं कुतोप्युपानीय नृपं न्यगादीत् ॥ ९९ ॥
तीर्थप्रसङ्गेन पुरा विभोऽहं कावेर्युपान्तेष्ववतिष्ठमानः ।
आरोप्य पोतं रुदतीं निजाङ्के विलोक्य काञ्चिज्जरतीमवोचम् ॥१००॥
पाकोऽस्ति कस्यायमभीष्टपाकस्त्वं नाम कार्पण्यविडम्बिता का ।
किमर्थमायातवती वनेऽस्मिन्किञ्चानुतापस्य किमस्ति बीजम् ॥ १०१ ॥
स्वशोकशङ्कूद्धरणक्षमं व परिप्लवाक्षी समवेक्ष्य सा माम् ।
नेत्रोदकं संजहती कराभ्यां समभ्यधाद्विप्रतिसारहेतुम्[1] ॥ १०२ ॥
एकः कनीयान्नृपराजहंसामात्यस्य सूनुः सितवर्मनाम्नः ।
तीर्थानि पश्यन्नखिलानि सत्यवर्मा द्विजो नीवृतमेनमायात् ॥ १०३ ॥
काल्याह्वयायां स निजाङ्गनायामनाप्तपुत्रो भगिनीं तदीयाम् ।
गौरीं सुगौरीं ललनामुदुह्य तस्यामपत्यं समपद्यतैकम् ॥ १०४ ॥
असूयया सा भृशमेककाले मयोपमात्रा सहितं शिशुं तम् ।
काली समानीय कुतोऽपि दम्भादस्यां तटिन्यां न्यमिनोज्जवेन॥१०५॥
तत्रान्तिके संवहतो द्रुमस्य कस्यापि शाखासु निवेश्य बालम् ।
नितान्तकष्टेन ममातरन्त्याः पदं ददंशाऽसितदंदशूकः ॥ १०६ ॥
यदृच्छया हन्त ममाश्रयोऽयं वृक्षः सदेशोऽत्र तटं समभ्यैत् ।
गरान्मृतायां मयि चेह कोऽमुं शिशुं प्रपातेति विचिन्तयामि ॥१०७॥
उक्त्वेति तस्या लघु मूर्छिताया हर्तुं विषं मन्त्रवशादनीशः ।
नयन्निकुञ्जादहमौषधीं स्वाग्व्यलोकयं तां परिमुक्तजीवाम् ॥ १०८ ॥
तत्रैव दग्ध्वाऽनलतस्ततस्तां शोकप्रवेगाधिकदूनचित्तः ।
भूमौ लुठन्तं मृदुहारिगात्रं कारुण्यपात्रं दधिवांश्च डिम्भम् ॥ १०९ ॥
भवान्हि पाता निजमन्त्रिनप्तुर्मयेति निर्धार्य धराधिनाथ ।
अजानतैतज्जनकाग्रहारं तवोपकण्ठे समनायि सोऽयम् ॥ ११० ॥

---

1 विप्रतिसारश्चिन्ता.

राजा विषीदद्धृदयोऽति सत्यवर्मस्थितेः सम्यगनिर्णयेन ।
तं सोमदत्तं समुदीर्य तोकं व्यधत्त पुष्टै सुमतेरधीनम् ॥ १११ ॥

इति संगतेष्वनुभवन्ननेकधा शिशुकौतुकानि तनयेषु मन्त्रिणाम् ।
शुभचौलिकोपनयनादिसंस्कृतीः सकलाः क्रमादधृत राजवाहनः ११२

सकलान्कलागमविदः कुमारकान् कुशलान्विलोक्य विविधायुधेषु तान् ।
रिपुलोकदुर्लभतरोऽहमित्यगाद् हृदि राजहंसनृपतिः परां मुदम्॥ ११३॥

इति श्रीकविमल्लभट्टहरिवल्लभकल्पितायां दशकुमारदशायां

प्रथमः सर्गः १



---

१ इयानेवायं निर्मितः प्रबन्धः पुनरपि निर्मितीभवितुं शक्तः परन्तु चर्वितचर्वणविशेष एवैष इति न तथा युक्तः ।

अथ

# श्रीकविमल्लभट्टहरिवल्लभरचितानि

# मुक्तकसूक्तानि

॥ श्रीहरिर्जयतितराम् ॥



प्राप्ता सुन्दरि साम वेद तनुताचेतोहरे सर्वथा
लोके केशव सामवेदतनुतां बिभ्रत्त्वमेव श्रुतः ।
सामानीत्ययि कथ्यतेऽद्य कमले नो वेद्मि धूर्त त्वया
काऽमानीति रमानिरुद्धवचनः सिद्धिं क्रियान्मध्वरिः ॥ १ ॥

त्वां लब्ध्वा किल किंचितं[1] शठ मया नानाङ्गनालम्पटं
मां लब्ध्वा किलकिञ्चितं हि चतुरे बाढं त्वया संचितम् ।
केलिं त्वं तु करोषि हन्त विदधे नो षट्पदं मूर्ध्न्यहं
कुर्वन् सिन्धुसुतां प्रहृष्टवदनामेवं हरिः पातु वः ॥ २ ॥

संजातोऽस्यधुना तु हन्त नितरां त्वं काकली[2]-लालसः
क्रीडायामलसोऽसि कस्य नितरां काकस्य वग्धि प्रिये ।
वाचो मे घटना[3]भिरिष्ट कुरुषे व्यर्थाः कुतस्त्वं सदा
नाभिर्नो घटवन्ममेति विजितश्रीः श्रीपतिः स्ताच्छ्रिये ॥ ३ ॥

देवि त्वं द्विपदा[4] दधासि न रुचिं युक्ताऽष्टभिः पाणिभिः
शोभे कुंजरदान्यहं न दधती बाह्वष्टकं भोः कथम् ।
कस्माद्धैमवति ब्रवीष्यपरथा[5] नन्वसि युक्ता रथैः
कुर्यान्मे गिरिशः शमित्यगभुवा वक्रोक्तिविस्मेरितः ॥ ४ ॥

---

१ दशसु भावेष्वेकतमोऽयं स्त्रीणां भावविशेषस्तल्लक्षणादिकं सर्वं नाट्यशास्त्रे प्रतिपादितमतस्तत एवावगन्तव्यम्. २ काकलीति कले सूक्ष्मे तत्र लालसा यस्य. ३ कल्पनाभिः. ४ द्वौ पदौ यस्याः. ५ अन्यथा.

अत्रालोकय चण्डिके हरिरयं[1] मन्दो दरीं सेवते
स्थाणो रावणयोषिदत्र हरिणा जुष्टा क्व संवीक्ष्यते ।
बाढं चापले[2]-तां दधास्ययि धनुर्वल्लीं दधानाऽधुना
दृष्टाऽहं कथमित्युमापरिजितः शर्वोऽनुकूलो[3]स्तु नः ॥ ५ ॥
नित्यं हन्त निषेवसे बहुतरां त्वं मातुलानीं विभो
नो मे कश्चन मातुलोऽस्ति दयिते सेवेय यत्तत्स्त्रियम् ।
आः प्रोक्तो विजयाकृतेऽसि कुमते नो त्वद्वयस्यामपि
ह्रीतां संविदधच्छिवामिति भृशं प्रीतान् भवो वः क्रियात् ॥६॥
अब्भारायत[6] उत्तमाङ्गचिकुरेष्वेषा मम स्वर्णदी
सत्यं शीर्षकचेषु भूरि पयसां भारायते सा तव ।
मैवं गच्छति हारतां पशुपते चक्रत्वमेवैति हा
पार्वत्येति पराकृतः पुररिपुः प्रीतिं परां वः क्रियात् ॥ ७ ॥
हेमाङ्गी कुरु शैलराजतनये सद्यः प्रसादं मयि
प्रोत्तिष्ठाऽपसर त्वयि प्रकुरुते का वा प्रसादं शठे ।
अज्ञानाऽसि विलासिनि त्वमधिकं वाक्ये मया व्याहृते
नास्म्यज्ञेति तु सत्यमेव शिवयेत्युक्तः शिवो नम्यते ॥ ८ ॥
प्राप्ता कातरता त्वया ननु यदा शुम्भाद्यभूदाहवः
काले तत्र मया न काऽपि तरता प्राप्ता ततो माशुचः[7] ।
तथ्यं तर्हि तु साध्वसं गत उमे नाहं तदा साधुभिः
संजातोऽहमसंगतोऽवतु शिवामेवं हसन् वः शिवः ॥ ९ ॥
अद्य त्वं मदनागमेन मुदितः शूलिन् समालक्ष्यसे
नूनं जातुचिदप्यहं न मुदितः कान्ते तवाऽनागमात् ।
प्रद्युम्नात्तु तथाऽसि भोः प्रचुरतो द्युम्नान्न चाऽपि प्रिये
जिह्मोक्त्या[9] परिहासयन्निति शिवां शर्वोऽस्तु हर्षाय[10] वः॥१०॥

---

१ सिंहः. २ चपल एव चापलस्तद्धर्मे. ३ परिजितो ह्यनुकूलः शीघ्रं भवति. ४ भङ्गाम्. ५ तस्या भङ्गाया एव कृते. ६ अपां हार इवाचरति. ७ शुचं मा कुरु. ८ भयम्. ९ वक्रोक्त्या. १० हासको ह्यपेक्षितो हर्षायेत्यानुकूल्यम्.

देवि त्वं सहजेऽपि हा परमदारुण्याऽसि नर्मक्रमे
नो मेऽन्यस्य मदेन काप्यरुणता संजायते जातुचित् ।
विद्वेषं कुरुषेऽयि हन्त विदधे वेषं विदः कस्य वा
पार्वत्येति पदे पदे परिजितः प्लुष्याद्धरः किल्बिषम् ॥ ११ ॥
सर्वेषां द्युपदां गिरीन्द्रतनये त्वं सूपकारिण्यऽसि
द्रष्टाऽहं शठ कुर्वती वद कदा सूपं[1] सुधाधायिनाम् ।
मुग्धे गोपनकारिणीत्यभिहिता नेष्टो गवां मे पनः
पार्वत्येति हृतोत्तरः पशुपतिः श्रेयांसि पुष्णातु[3] वः ॥ १२ ॥
स्वर्गङ्गां शिरसा श्रयामि सततं संपश्य शैलात्मजे
न स्वर्गं न च गां त्वदीयशिरसि प्रेक्षेऽधुना धूर्जटे ।
न व्याहार[4]महं त्वया कुटिलया कुर्वे नवं भोजनं
सार्धं हन्त मया प्रकुर्विति शिवाप्रोक्तः शिवः पातु नः ॥ १३ ॥
अम्भोजाक्षि निरीक्षसे त्वमधुना हन्ताऽपरागा[5] भृशं
नागश्चैकमपि स्मरामि कतरद्रूपे द्वितीयं पुनः ।
अत्रास्ते गिरि[6] वक्रता तु सुतरां सर्वत्र वक्राह्यगा
इत्थं भूधरनन्दिनीविहसितः शम्भुः शुभायाऽस्तु वः ॥ १४ ॥
वाढं दारक[7]लालसः स्मररिपो त्वं लक्ष्यसे सांप्रतं
नूनं नास्म्यलसः कदाऽपि ललने स्त्रीणां कला[8]सु त्वहम् ।
कर्तुं त्वं कुशलोऽसि भूरि पदविच्छेदं पदव्याश्छिदं
कर्तुं नासि पटुः शिवां विहसयन्नित्थं हरः पातु वः ॥ १५ ॥
त्वत्कारुण्यकदम्बकाज्जगदिदं जीवत्यशेषं विभो
नाऽरुण्येन जगत्कदाचिदपि मे जीवत् प्रिये कल्प्यते ।
वाक्यं नाथ तवोर्मिमद्बहुविधं पानीयकं वीचिम-
न्नोवाक्यं भवतीत्युमां परिगदंस्त्र्यक्षः समक्षोऽस्तु वः[9] ॥ १६ ॥

१ यस्य दाल इति लौकिकं नाम. २ पनः स्तवः. ३ अनुत्तरः सर्वं करोतीति तात्पर्यम्. ४ वि-आ-उपसृष्टो हरतिर्वचनार्थकः. ५ अपगतो रागः प्रेमा यस्याः. ६ वाचि. ७ दारके पुत्रे लालसा यस्य. ८ ग्रन्थविशेषेषु. ९ द्व्यक्षाणां त्र्यक्षस्य समक्षता व्यपेक्षितैव.

कान्ते मन्थरगामिनी मम पुरो हंसीव संशोभसे
हन्म्यग्रे तव कं न्वहं पशुपते मामेनमालोकय ।
कृत्वा मय्यनुकम्पनं प्रियतमे निर्मुच्यतां मत्सरः
किं मे त्वत्सरसेति पर्वतभुवा प्रोक्तः शिवोऽस्तु श्रिये ॥१७॥

संजाताऽश्रु-[1]तरङ्गसंहतिरवा गङ्गेर्ष्ययाऽस्यद्य किं
नो कश्चित्तव रङ्गसंहतिरवैः शंभो ममार्थैः श्रुतैः ।
न क्रोधः क्रियतां तयैव सुमनो[2]नद्या झषोऽधः कृतो
मानिन्येत्युमया कदर्थितवचाः क्षेमार्थमीशोऽस्तु नः ॥ १८ ॥

यः क्लृप्तां हरिवल्लभेन कवनोत्तीर्णेन गौरीशयो-
रेतां भक्तिभृतं पठिष्यति मुहुर्वक्रोक्तिपद्यावलीम् ।
सद्यः स्यात्सु[3]कृती कृती स वचसां चातुर्यधुर्यः परं
सम्यक्प्राप्तसुखाप्तनिश्चलमनोवृत्तिप्रवृत्तिस्तथा ॥ १९ ॥

[4]तं प्रत्येकनितम्बिनि श्रितनिजप्रत्यग्रमायाकृतिं
श्रीकृष्णं नु विलोक्य षोडशसहस्रान्तःपुरस्यान्तरे ।
आत्मीये नवकोटिसंमितवधूवर्गे सदा वर्तते
यः प्रत्येकपुरन्ध्रि भैरवतया रुद्राय तस्मै नमः ॥ २० ॥

तमहं प्रभावमतुलं लोकातीतं नमामि गिरिशस्य ।
येनाऽजीवत्पुनरपि शरीरमप्यन्तरा मदनः ॥ २१ ॥

अलिस्फूर्जत्केशं विविधभृतवेशं व्रजविभुं
स्वगुद्यद्दृद्देशं धृतसुरनिदेशं यदुसुतम् ।
उदन्वत्कन्येशं शयनमतशेषं किमपरै-
र्हृषीकेशं भक्त्या चिदुदयविशेषं भज मुहुः ॥ २२ ॥

---

१ अश्रूणां तरङ्गसंहते रवोऽस्ति यस्याः. २ सुमनसां देवानां नद्या गङ्गया. ३ पुण्यशाली
४ नवकोट्यस्तु चामुण्डास्तावद्रूपाणि शङ्करः । कृतवाँस्ताश्च भजते पतिरूपेण भैरव
इति प्राचीनं तन्त्रपद्यमनुसृत्य भगवतो महेशस्य स्तुतिरूपोयमुत्प्रेक्षालङ्कृतः श्लोकः.

अशेष[1]विधयैकतानुभवकर्तुकामे सदा
नितान्ततरनिश्चले मधुभिदः श्रियश्चाक्षिणी ।
शुभानि तनुतां मम स्वबहुसत्व[2]शक्तेर्मिथः
पराभिगम[3]रक्षणं विदधती इवाऽनारतम् ॥ २३ ॥

रङ्गस्य वहिः सहसा पुरा न्ययुध्यत गजेन यः साकम् ।
नमति मुहुः कविमल्लः कस्मैचन दिव्यमल्लाय[4] ॥ २४ ॥

वद्धाञ्जलिस्तुवद्भक्तसदिच्छाजालदोहनः[5] ।
मुदेऽस्तु दिव्यरूपो नः स कश्चिद्बालमोहनः ॥ २५ ॥

श्रीराधाकरकमलयुगधारितनववनमाल ।
मन्दहासनन्दितवदन जय जय नटवरलाल ॥ २६ ॥

विजयप्रिय विजयं कुरु सफलय संचिन्तितानि सकलानि ।
पश्य पुरतः प्रपन्नं पारं प्रापय च दुःखानाम् ॥ २७ ॥

नारायण निखिलाभिनुत निजजननिचितविनोद ।
मिप मां प्रेमदृशाऽनिशं भुजचर्[6]चन्दनविक्षोद ॥ २८ ॥

नामये तव पदाब्जयोः शिरः क्षामये[7] भृशमनौचितीगिरः ।
कामये स्वकविताप्रकाशनं मामये कुरु कृपैकभाजनम् ॥ २९ ॥

श्रद्धासदासमधिकार्चनसुप्रसन्न-
वाग्देवतावरवितीर्णवरप्रसादाः ।
श्रीमन्मदीयगुरवोऽत्र सुजीवजीव-
जीवातवः सुकृतशास्त्रदृशो जयन्ति ॥ ३० ॥

एकस्य वस्त्रमसितं च परस्य पीतं
वर्णः सितस्तदितरोऽथ हलं तथाऽरम्[8] ।
शस्त्रं करे च मुदमुत्त[9]पनात्मजायाः
पुत्रौ विचित्रचरितौ किल वासुदेवौ ॥ ३१ ॥

---

१ सर्वथा. २ यस्य दावा इ. प्र. ३ परस्मिन्नभिगमः सङ्गः तद्रक्षणं. ४ मनुष्यस्य हस्तिना समं नियुद्धे जयो दिव्यतामेव काश्चित्पुष्णाति. ५ पूर्णतासाधनः. ६ भुजयोर्द्रवितचन्दनस्य विक्षोदो यस्य. ७ क्षामं क्षान्तिं व्याचष्टे इति सिद्धिः. ८ अरं चक्रं. ९ कृष्णस्य तपनात्मजाया मुद् परस्यामुद्।

नटयन्तमहिं मूर्ध्नि नटन्तमहिमूर्धनि ।
गङ्गेशं यमुनेशं वा कञ्चि[1]द्देवं भजामहे ॥ ३२ ॥

काकली गण्डभृङ्गाणां भक्तैर्वाद्यधियोह्यते ।
यच्छुण्डादण्डनटने स वोऽवतु गजाननः ॥ ३३ ॥

अशेषविविधार्थौघं स्वा[2]ऽभिन्नं हि करोति या ।
प्रधानशक्तिं तां देवीं श्रीमतीं भारतीं श्रये ॥ ३४ ॥

क आश्रयः कवित्वस्य शारदाशरणं महत् ।
माहात्म्यमम्बिकायाश्च तृणं तत्तु मरुद्वशम्[3] ॥ ३५ ॥

आरोहावसरे सुचारुगमनप्रख्यातिजातस्मयो[4]-
द्रेकं हंसमदभ्रसिञ्जनरवव्याजेन मञ्जीरयोः ।
उच्चैः श्रावयतो मुहुर्मुहुरलं यौ सिंहनादानिव
श्रेयस्तौ कविसंहतेर्वितनुतां श्रीशारदायाः पदौ ॥ ३६ ॥

मातर्मणिमयमाले मयि मूर्खे महति मुक्तमदे ।
कविताकरणकलां कुरु कमलासनै[5]कन्यके कामम् ॥ ३७ ॥

अपि त्रैलोक्यमाता या श्रूयते मेनकात्मजा ।
अपि काली च या गौरी देवीं कामपि तां भजे ॥ ३८ ॥

मञ्जीराभाधवलिततनुश्रीजितेशा[6]नवाह-
स्यांसे शत्रोर्महिषवपुषः क्रोधदत्तो ययाङ्घ्रिः ।
उक्षारूढेत्यमरनिकरैस्तत्प्रभृत्येव यस्या
नामख्यातिस्त्रिजगति कृता साम्बिका वोऽस्तु सिद्ध्यै ॥ ३९ ॥

एकस्मै कस्मैचन निखिलजगद्ध्वतमःप्रतीपाय ।
दशशतवर्तीर्दधते नमांसि मम सन्तु दिवसदीपाय ॥ ४० ॥

---

१ हरिहरान्यतरम्. २ स्वया वाचकतया अभिन्नं. ३ यत्र देव्याः कृपा तत्रैव कवित्वं इति कृपैव गरीयसी तस्याः. ४ स्मयोऽवलेपः. ५ कमलासनो विधिस्तस्य कन्या ब्राह्मी ब्रह्मणोऽपत्यं स्त्रीति निर्वचनमपि. ६ वृषभ.

भोः प्रथमं सर्वेषां श्रीहनुमन्तं नमस्कुरुत ।
संचारकाः प्रसाद्याः[1] कृत्यज्ञैः प्रायशः काले ॥ ४१ ॥

आस्ते कश्चरितानि शक्तिसहितो मायाविनां वेदितुं
सेवन्ते न हि यानि जातु सरणिं संभावनाया अपि ।
कंसक्षोणिभुजा पुरा विरचिता नाना प्रबन्धाः परं-
त्वासन्नन्धदृशो हि रक्षकहताः कृष्णावतारक्षणे ॥ ४२ ॥

सहस्रबाहुः खलु सावरोधः क्रीडन् यदा मेकलजाप्रवाहम् ।
मुमोच रुद्ध्वा सहसा तदाग्रे तेरुस्तरां तीरतरूँस्तरण्यैः[2] ॥ ४३ ॥

वनद्विपैः शोणतटाद्विदीर्णात् पूरेऽम्भसां वार्जितुं[3] प्रवृत्ते ।
जलावृताँस्तान् सरिति क्रमेण तेरुस्तरां तीरतरूँस्तरण्यः ॥ ४४ ॥

यदाङ्ग[4]राजः खलु जामदग्न्यतः संग्रामविद्यां छलतः पपाठ सः ।
तत्तस्य बुद्ध्वा पुनराह देशिकः काले न विद्या सफलीभविष्यति[5] ॥४५॥

लङ्काधिपाज्ञावलतः प्रदीपिते नक्तंचरैः पुच्छमुखे हनूमतः ।
तपःप्रतापाज्जनकात्मजन्मनो हुताशनश्चदनपङ्कशीतलैः[6] ॥ ४६ ॥

चन्द्रोपलाचितविशङ्कटगर्भ[7]चुल्ही-
शीर्षस्थपात्रपरिवर्तनजातपातम् ।
साश्चर्यमीक्षितमभीरनवीनवध्वा
हैयङ्गवीनमनले कठिनं बभूव ॥ ४७ ॥

गृह्णीयां परकामिनीं कथमहं दुष्यन्तवाणीमिमां
श्रुत्वा प्राप शकुन्तला मलिनतामास्ये यदा चिन्तया ।
दूनान्तर्नितरां तदा सकरुणं चक्रन्द सा गौतमी[8]
हा कष्टं किमकाण्ड एव तमसा तारापतिर्ग्रसिष्यते[9] ॥ ४८ ॥

---

१ तस्मात्स्वामिनं तत्कृते सदैव ते संततं बोधयन्ति. २ समस्येयम्. ३ मेकलजा नर्मदा अतिशयेन व्रजितुम्. ४ भारतप्रसिद्धः सूतपुत्रः कर्णो दुर्योधनमित्रम् तदेतत्सर्वंकथा भारते विस्तरतो द्रष्टव्या. ५ समस्येयम्. ६ समस्येयम्. ७ विशालः मध्यो यस्याः सा. ८ दुष्यन्तगृहे शकुन्तलां प्रेषयितुं गौतम्यपि प्राप्तास्ति दृश्यमत्र शाकुन्तलं दृश्यं गौतमीवर्जं गता इति. ९ समस्येयम्.

स्थित्वा स्तोकदिनानि पुष्करतटे गत्यां कृतायां पुरः
किञ्चिन्निर्जरनिम्नगापरिसरो दूरे यदा तस्थिवान् ।
यात्री कोऽपि मनोहृतः[1] प्रलपनं चक्रे तदानीमिदं
हा कष्टं किमकाण्ड एव तमसा तारापतिर्ग्रस्यते[2] ॥ ४९ ॥

आरामेऽथ दवीयसि क्वचिदपि प्राप्ता वियुक्तेन्दुना
स्वच्छन्दं विहरेति भर्तृभणिता स्वास्थ्याय तारा[3] यदा ।
एनां तत्र च मूर्च्छितां पिकैरवैर्[4]दृष्ट्वा वयस्याऽक्रुश-
द्धाकष्टं किमकाण्ड एव तमसा तारापतिर्ग्रस्यते ॥ ५० ॥

कालेनाद्य हि भूयसाऽभिलषितः पूर्णांश[5]मानो महान्
निस्सीमं प्रसृतेषु रश्मिषु सुधा सर्वोऽद्य हि व्यापिनी ।
प्रोद्गाढा सुचिरं निजाद्य हि तथा योषित्प्रसत्यै[6] स्थिति-
र्हा कष्टं किमकाण्ड एव तमसा तारापतिर्ग्रस्यते ॥ ५१ ॥

अत्युत्कण्ठितचेतसां व्रजवने गोपाङ्गनानां यदा
साकं श्रीयदुनन्दनेन सुचिरं होलोत्सवो जातवान् ।
धूलिर्व्योमपथेऽभितः प्रसृमरा पैष्टातकी साऽव्रज-
च्चित्रं[7] नैव घना नवा ग्रहविधिर्भानुर्न मध्यन्दिने ॥ ५२ ॥

भूयाँस्तत्तदुपायकल्पनमृते सिद्धः स्वतः सँस्तव-
श्चित्ते हन्त गतागतैरपि पुनः कश्चिन्न केषां भ्रमः ।
प्रायः सर्वसमक्षमेव च मिथो नानाविधा व्याहृति-
[8]र्यस्यास्ते प्रतिवेशिनी प्रियतमा मन्ये स धन्यो जनः ॥ ५३ ॥

आरामेऽत्र वसन्तशालिनि सदा नूनं सखि त्वत्कृते
मालाकारसुतेन वञ्चितदृशं तातं विधाय च्छलात् ।
आनीतानि निकुञ्जमध्यभवने यान्यालि तानि स्फुटं
दृष्ट्वा पक्वफलानि मे मृदुमनो मोहं समापद्यते[9] ॥ ५४ ॥

---

१ हतमनोरथः. २ शकुन्तलामुखरूपितश्चन्द्रः. ३ बृहस्पतेः स्त्री. ४ कामोद्दीपकैः. ५ चन्द्रोपरागः पूर्णिमायामेव भवति तदा चन्द्रः षोडशकलादीप्त एवेत्यर्थः. ६ रात्रिरूपस्त्रीप्रसादाय. ७ समस्येयं. ८ समस्येयं. ९ इयमपि समस्या तत्र त्वमेनेन संगतवतीति मया ज्ञातमिति मोहप्राप्त्युक्तिः प्रतीयते.

यथाऽसङ्क्रातॄणां सपदि बहुपद्यानि कृपया
भवद्भिर्नीतानि श्रममपि विधाय प्रकटताम् ।
तथैवासत्पद्यान्यपि कुरुत सद्भावमुदिरा[1]
वने वा हर्म्ये वा समकरनिपातो हिमकरैः[2] ॥ ९५ ॥

श्रयन्ते सांप्रतं कौमवनीं[3] श्रीगोकुलेन्दवैः ।
विरागिणोऽपि कान्दर्पान्दूरात्परिहरन्ति च ॥ ९६ ॥

कं सारातिं निरीक्ष्यैव मोदन्ते दितिजाः परम् ।
कमलं स्फोटयत्यर्कः पतिं का स्त्री प्रणिन्दति ॥ ९७ ॥

एकाऽकिनी[5] स्त्री ज्योत्स्नायां रे[6] को जीर्णज्वरे जयी ।
का पालिका सशानस्य स्विन्नः कामयते च कम्[7] ॥ ९८ ॥

सगुणा तिन्तिडी केन प्रदरात् कोऽमिनी[8] भवेत् ।
के सरां[10] गदिता वैद्यैः कान्ताङ्के किल किं चितम् ॥ ५९ ॥

किं नरत्वं विजयते कुंतो[11] गन्धश्च जायते ।
साधु यातेति जल्पन्ति पथि कान्राजमानुषाः ॥ ६० ॥

धिक्कृतः कुंहे[12] को नूनं को मलोम्बरै[13]र्लिम्पकः ।
कं[14] कं मार्गति धानुष्कः [15]शं काऽकस्माद्रुणद्धि च ॥ ६१ ॥

कृशानुरेतसः काली दण्डिनाऽख्यायि कां[16] पुरा ।
गलन्ति कौ[17] जलं नाल्या स्त्रीणां कण्ठे ललन्ति कर्णाः[18] ॥ ६२ ॥

कुं[19]शलतरैकग्राह्यं नानागतिमत् पराऽनुरोधहरम् ।
शास्त्रं शस्त्रं च समं केवलमाकारतो[20] भिन्नम् ॥ ६३ ॥

---

१ मुदिरो मेघः. २ समस्या सौन्दर्यलहरीश्लोकपादोयम्. ३ एतन्नाम्ना प्रसिद्धाः. ४ पूर्वं जयपुरस्थितश्रीगोकुलचन्द्रमसो देवाः. ५ दुःखिनी. ६ रेकोऽपि जीर्णज्वरमपहन्ति स्पष्टं वैद्यके. ७ जलम्. ८ तिन्तिडी चिञ्चाद्रुमः तिन्तिडीकस्तु डाँसर्या इ. प्र. ९ रोगिणी. १० कृतमालस्य केसराः सरा इ. वैद्याः. ११ कुः पृथ्वी. १२ पिशुनो दुष्टः. १३ अम्बरं वस्त्रं. १४ पक्षिविशेषः स बाणोपयोगार्थं हन्यते तैः. १५ शुभम्. १६ दशकुमारचरिताभिधा तस्या मया सारग्रन्थोप्येकः संक्षिप्तः सहस्रसंख्यात्मको निर्मितोस्ति पुनरनुवादरीत्या विधित्सितस्तत्तस्यैकः सर्गस्त्वत्र पुस्तके मुद्रित इति ध्येयम्. १७झारीतिप्र. १८ हारविशेषो ललन्तिका. १९ एषा व्यतिरेकविच्छित्तिः. २० आस्वरादाकाराच.

निःशेषतापसोढुर्गुर्वाश्रयतो[1]ऽधितिष्ठतः सुचिरम् ।
छात्रस्य च्छत्रस्य च केवलमाकारतो भेदः ॥ ६४ ॥

व्रजतां वर्त्मनि नितरां प्रकुर्वतो बहुविधं सौख्यम् ।
पात्रस्य च पत्रस्य[2] च केवलमाकारतो भेदः ॥ ६५ ॥

पीवरपादस्य[3] बृहत्कटकस्य[4] च दन्तकान्त[5]रूपस्य ।
आकारमात्रगम्यं नगस्य नागस्य पार्थक्यम् ॥ ६६ ॥

आनकदुन्दुभि[6]शब्दं नर्तनसमये प्रहृष्यतः श्रुत्वा ।
मातुल[7]मर्दनकर्तुर्हरेर्हरस्या[8]स्ति भेद इर्ना ॥ ६७ ॥

येषामप्स्वेव बलं सर्वत्रैवास्ति येषां तु ।
ते ग्राहाः क्व च तेऽपि ग्रहाश्च कुह जीवधर्त्तारः ॥ ६८ ॥

[9]सिन्दूरदिग्धपिण्डौ गजौ प्रपश्यत मिथोऽभियुञ्जानौ[10] ।
दन्तादन्तिकयेव प्रोद्भिन्नक्षतजलाञ्छनावेतौ ॥ ६९ ॥

एष प्रतिनागोऽपि प्रत्यभियान्तं द्विपं दुरीक्ष्य[11] परम् ।
पूर्णाभोगौ कर्णौ पक्षीकृत्येव सूड्डयते ॥ ७० ॥

आधोरणमुक्तानां धूमौघे प्रसृमरेऽग्निबाणानाम् ।
एते संभ्राम्यन्तो गजा दधत्त्यभ्रमातङ्गचर्यम्[12] ॥ ७१ ॥

कुपितोऽग्रे वलितमुखीं वडवां हेषावधीरितान्यरयाम् ।
मुहुशः शुण्डोत्क्षेपाद्धावति संतर्जयन्निवायमिभः ॥ ७२ ॥

प्रथमफलितपिकवल्लभ[13]पक्वफलानां निचूषणावसरे ।
अनुभूयते मया तु प्रसूस्तनक्षीरपानसुखम् ॥ ७३ ॥

मलयभवान् कुर्वाणान्गन्धेनान्यद्रुमानपि स्वसमान्[14] ।
सृजता विधिना सृष्टा आम्रा अपि तादृशा न कथम् ॥ ७४ ॥

---

१ विद्यागुरोराश्रयात् गुरुश्चासावाश्रयश्च तस्माच्च व्यतिरेकोऽत्र. २ वाहनस्य. ३ पर्वतपक्षे पादाः प्रत्यन्तपर्वताः. ४ पर्वतपक्षे कटकं तन्मध्यः. ५ दन्तकाः दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः ते अन्ते यस्यैवंरूपं यस्येति गिरिपक्षेऽर्थः. ६ वासुदेवो वाद्यविशेषो च तच्छब्दम्. ७ शिवपक्षे मातुलो धत्तूरः. ८ इस्वरेण कामेन च. ९ जयपुरमहाराजगजयुद्धवर्णनमिदं पद्यचतुष्टयेन. १० परिणमन्तौ. ११ दुःखेन ईक्षित्वा. १२ अत्रभावे ण्यप्रत्ययः. १३ पिकवल्लभ आम्रः. १४ प्रसिद्धमिदं सर्वत्र.

पिबतां करसंवाहनविनिस्सृतं सान्द्रमाम्ररसम् ।
तरुणीगण्डोष्ठयुगं भवति पुरस्तादनादृतं प्रायः ॥ ७५ ॥

[1]अस्याः संभृतनिर्मलाऽधिकरसे श्रीदीर्घिकायास्तले
स्वैरं चारुतरं तरन्ति शतशः पश्याग्रतः पेशलाः ।
किञ्चैतांस्तरणक्रियावगतये तीराद्द्रुतं पातिता-
न्मोहग्राह्यपरिस्फुरत्पदगतीन् संतारयन्त्यर्भकान् ॥ ७६ ॥

[2]अस्मिन् भापणमेघपुष्पभरिते पारुष्यनक्रोज्झिते
व्युत्पत्त्याख्यशिलां प्रसार्य परिपद्वेशन्ततीरस्थले ।
[3]गीर्निर्णेजकयोपयाऽखिलवचोवासांसि संख्यावता-
माश्चर्यं विरहय्य मौल्यमधुना नेक्तुं स्थिरं स्थीयते ॥ ७७ ॥

[4]मध्ये मध्ये विकचकुसुमाच्छादिताच्छाच्छगुच्छा
सौरभ्येण प्रसरणवता दत्तसद्धृत्प्रसादा ।
गुम्फं नीता दृढगुणगणैः केनचिन्मालिकेन
काचिद्दिप्यद्भ्रमधुकरकुलव्याकुला भाति माला ॥ ७८ ॥

तैस्तैर्दूरात्परमुपहृतैर्या द्रुमैः प्रावृतासी-
त्प्रापत्प्राज्यान्मधुररसतः सातिरेकांश्च सेकान् ।
पर्यप्रीणात्सुरुचिरफलैर्याऽखिलान् सांप्रतं सा
शुष्यत्येपा शिव शिव विना मालिकं पुष्पवाटी ॥ ७९ ॥

दुर्गाप्रसादे विरते [5]पञ्चनिर्वाहिताऽधुना ।
द्रौपदीत्वमियं नूनं श्रयते काव्यमालिका ॥ ८० ॥

---

१ रूपकातिशयोक्त्या कस्याश्चित्सभाया इदं वर्णनम् तत्र वाप्यारोपेणोक्तिः सभादे-निगरणं रसो जलमुच्चतरणं वक्तुं प्रवर्त्तनं च तीरात् निगीर्णात्सामीप्यातच्च पदगतिः सुप्तिङन्तपदप्रकारश्चरणव्यापारश्च तारयन्ति शुद्धं वादयन्ति च. २ इदमपि पूर्ववत् अत्र मेघपुष्पं जलं परिपद्वेशन्तः सभारूपं सरः. ३ एतेन तस्यां सभायां गीः-कृपया सर्वे वचांसि शुद्धानि गदन्तीति ध्वनितम्. ४ इदं श्लोकपट्कं काव्यमालाख्य-मासिकपुस्तकवर्णनपरं तत्र प्राग्द्वे रूपकातिशयोक्तिमये पद्ये. ५ तत्तन्मैथिलसुन्द-रशर्मादिभिः पञ्चभिः प्रकाशिता.

एतेषु वर्वृतत्सु ज्येष्ठा[1]षाढीयतापदिवसेषु ।
हा स्वीकृतबहुसुमना मालाकार क्व यातोऽसि ॥ ८१ ॥

पूर्वं परस्सहस्राः पङ्क्तीः परिदर्श्य परस्स[2]वर्णानाम् ।
नैकमपि स्वसवर्णं[3] दर्शयसे किमिति हाऽधुना विद्वन् ॥ ८२ ॥

इयं साऽमरवल्लीव काव्यमालाऽधुना मता ।
च्युतमूलाऽपि पतिता यत्र कुत्र प्ररोहति ॥ ८३ ॥

सामर्थ्यं प्रथमं निरूप्य मनुजः साहाय्यमाप्त्वा दृढं
कृत्वा चाऽपि विचारणं सुमतिमान्विघ्नं निहत्य क्रमात् ।
उत्साहं प्रतिरोप्य चात्मनि भृशं कुर्वीत कार्योचितं
सूद्योगं पुनरेनमाप्स्यति फलं सद्यो विलम्बेन वा ॥ ८४ ॥

लोकेऽपि स्फुटमेतदस्ति बहुधा यत्सावधानोऽधुना
नो गन्तासि विवञ्चनं चिरमिति प्रत्येककृत्यं वचः ।
तेनैवाप्यनुमीयते न किमिदं यत्सावधाने कृते
चित्ते नैव भवेत्प्रतारणविधिः सद्धेतुसाक्षात्स्थितेः ॥ ८५ ॥

यन्मन्त्रोऽप्युपदिश्यतेऽथ गुरुणा कश्चिद्धि मध्येक्षपं
यच्चैकान्तगृहे विचारकरणं स्वैरं तथा जायते ।
चित्तैकाग्र्यकृतेऽस्ति केवलमिदं तत्सर्वमित्यादिकं
स्थैर्यं याति फलन्ति चेतसि नृणामुद्योगिनां सिद्धयः ॥ ८६ ॥

सार्धं कुत्सितमनसा न साधुना दुष्टवृत्तिरेष्टव्या ।
कालान्तरे स एव त्रपानतस्त्यक्ष्यति द्वेषम् ॥ ८७ ॥

विद्यानामुदयस्य सर्वभुवनश्रेयस्करैः सांप्रतं
श्रीलैस्ताम्रमुखैः प्रभूतविधया संदर्शितस्याऽभितः ।
प्राबल्यं कथयेय हन्त किमहं प्रत्यक्षमेवेक्ष्यतां
नीचानां किल नित्ययुक्तमपि यन्नीचत्वमेति क्षयम् ॥ ८८ ॥

---

१ ग्रीष्मे हि दुर्गाप्रसादो विषूचिकया सहसाक्रान्तः. २ ङ् ञ् ण् इत्यादीनां. ३ स्वतुल्यं. ४ सदधिकारलाभात्.

युक्तितः कार्यकरणे महान्तः सन्ति सद्गुणाः ।
जायते सेवितं युक्त्या विषमप्यमृताऽधिकम् ॥ ८९ ॥

प्रागेव प्रतिकुर्वन्ति भाविनीर्विपदो बुधाः ।
अवसीदन्ति मन्दास्तु विपद्भिः प्रतिताडिताः ॥ ९० ॥

सति प्रसङ्गे दस्येस्य स्तुतिर्युक्ता महत्कृता ।
विजयं दर्शयन्त्याशु भटा राजाभिनन्दिताः ॥ ९१ ॥

ज्ञानीयं हि सजातीयं पानीयं हृदयं तथा ।
चलितं न भवेल्लब्धं लब्धं न चलितं पुनः ॥ ९२ ॥

इदं हि लक्षणं लक्ष्यं रमणीयस्य वस्तुनः ।
स्मृतमप्यपरं सर्वं विस्मारयति यद्धठात् ॥ ९३ ॥

नोत्तरीयान्न ताम्बूलान्न वित्तान्न च भूषणात् ।
न तथा नन्दति कविर्यथेतरकविस्तुतेः ॥ ९४ ॥

गीर्भिः स्तुतिप्रधानाभिः प्रसीदति कविर्भृशम् ।
सन्ति गीःसंश्रयादेव सर्वकार्याण्यमुष्य यत् ॥ ९५ ॥

नित्यः शब्दार्थसंबन्ध इति यः शास्त्रनिश्चयः ।
कवीनामेव कृतयो विचित्रास्तस्य साक्षिकाः ॥ ९६ ॥

नित्यं स्वापेन ममतामोचिताऽशेषवस्तुना ।
अहह प्राणिनः किञ्चिन्न नोऽस्तीति न जानते ॥ ९७ ॥

अविद्या नाम नारीयं सूयते सकलं जगत् ।
सर्वं चात्ति स्फुटं पारं गतान्द्विजांस्त्यजत्यपि ॥ ९८ ॥

सदवसरेऽन्येषां यः समुदश्रुमुखायते यतो नियतम् ।
सज्जनदुर्जनलोकः सदृशः प्रोक्तो मयाऽन्योन्यम् ॥ ९९ ॥

---

१ विषस्य गुणा निघण्टौ-तदेव युक्तियुक्तं तु प्राणदायि रसायनमिति नाना सन्ति. २ शिष्यस्य. ३ ज्ञेयं. ४ ममतया त्याजितानि अशेषधनादिवस्तूनि येन. ५ नोऽस्माकं किंचिन्नास्तीति न जानते. ६ स स सर्वैः प्रकृतिप्रपञ्चोऽयमविद्यैव. ७ सुखाहिताश्रुमुखायितः सज्जनः सम्यगुदश्रुमुखायितो दुर्जनः.

[1]उपकारकोपकारी नित्यं नेत्रप्रसादकारी च ।
धीरहितः सज्जन इव विनम्यते दुर्जनोऽपि मया ॥ १०० ॥
विदु[2]षां नात्मनि कार्यः कदाचिदप्युपरतः समुत्साहः ।
क्ष्मां प्रागकृक्षदखिलां कर्णः प्रोत्सह्य धृतचक्राम् ॥ १०१ ॥
अन्यव्याकुलतायां सर्वेषां कौतुकं महद्भवति ।
आपत्तौ प्रतिकूलं प्रभवत्यनुकूलमपि बहुधा ॥ १०२ ॥
न विमुञ्चति कश्चिदपि प्रज्ञावानुत्तमानि वस्तूनि ।
मकराल[3]यतलकर्दमगुप्ता अपि किमिह दुर्लभा मुक्ताः ॥ १०३ ॥
भवति रजःसंवलितं क्षणमप्यपमार्जितं सदह्याय ।
प्रतिमितसमस्तभावं मुकुरतलं सदृशमस्ति हृदयस्य ॥ १०४ ॥
वृक्षः करोत्यपेक्षां मालाकारस्य सिञ्चतस्तावत् ।
यावद्बिभृते मूलं रसां[5] रसैरस्य न स्वगतम् ॥ १०५ ॥
वास्तविकमजहरिणयोर्बलं विशिष्टं न वर्त्तते किमपि ।
गर्वेण शृङ्गचेष्टा पुनरपि या सा नरत्त्व[6]माहात्म्यात् ॥ १०६ ॥
श्रीवत्स[7]लाञ्छन त्वं केनचिदेवं सलीलमपि लपितः ।
लाञ्छनरहितायामपि सलाञ्छनत्वं हरे श्रियां तनुषे ॥ १०७ ॥
किं कर्तव्यत्वपथे तत्तदुपप्लवतमोवृतस्य तव ।
भवतु गती रिपुमस्तकनिपतद्वज्राग्निसंप्रकाशेन ॥ १०८ ॥
वक्षोमुखशीर्षादिषु सकलेष्वङ्गेषु भान्ति पलितानि ।
स्थविराणां तरुणिम्नः परिदग्धस्येव भसितानि ॥ १०९ ॥
स्याद्द्रष्टृवत्तु चित्रं द्रष्टा स्याच्चित्रवत्किच ।
स्तुतिरियमेव प्रचुरा चित्रस्य प्राज्ञलिखितस्य ॥ ११० ॥
लभते कृतनिर्णयार्थतः परिवृत्तिं स भवेत्कथं प्रियः ।
विपदि प्रियतां च याति यः कृतवैरोऽपि कथं स वैरकृत् ॥ १११ ॥

---

१ उपकारे कोपकारी नेतॄणां अप्रसादकारी धिया रहितश्च दुर्जनस्तद्भिन्नो यथोक्तः सज्जनः. २ इयं भारतीया कथा. ३ समुद्र. ४ अप्रोञ्छितं. ५ पृथ्वी. ६ पुलिङ्गवाचिनौ शब्दावुच्येते तन्माहात्म्यादुचितं तुच्छमप्येतत्. ७ श्रीवत्-सलाञ्छन-श्रीवत्स-लाञ्छन-इति च्छेदः. ८ विघ्न. ९ वैपरीत्यम्.

त्रातुं यज्ञं कुशिकमुनिभूरप्ययाचीद्यद्द्वौ[1]
यत्कैकेयी वरयुगकृते कान्तमसारयत्त्वाक् ।
यच्च क्रव्यात्समुचितरतेस्ताडकाया नृरांग-[2]
स्तद्भाग्यानां विलसितमिदं रामभद्रस्य सर्वम् ११२ ॥[3]
कौरव्याः शतमुत्तरोत्तरमहाशौर्यप्रचण्डाः क ते
तेऽपि द्यूतजिताश्च पञ्च तनयाः पाण्डोः क दीना वने ।
सत्यप्येवमभूज्जयस्तु समितौ कुन्तीसुतानां हि यः
सोऽयं स्वीकृतपक्षपातमहिमा[4] लोकोत्तरः श्रीपतेः ॥ ११३ ॥
अवर्षता तोयमुचा तटाकतटाग्ररूढस्य महीरुहस्य ।
एतावदेव क्रियते स वाञ्छां विकर्तुमैषीति[5] यदस्य शोभाम् ॥ ११४ ॥
पेठन्नपाहारि[6] वृथा कुमारो युष्माभिरिभ्यैः किमिदं कृतं हा ।
न हृद्यतामेति कदाप्यकालभ्रष्टः शलाटुर्हि[6] पुनः स्वपाके ॥ ११५ ॥
अस्तक्ष्माभृद्गहनदहन[7] त्वं विना कारणं स्वं
निन्दोदन्तं स्पृहयसि कथं मूढ दग्ध्वाऽद्य घासान् ।
दीनाँस्त्वेताञ्झटिति सहसा स्यन्दनोद्वाहखिन्नाः
प्राप्ता एते शशधरहयाः खादितुं बद्धतृष्णाः ॥ ११६ ॥
दत्ते दुःखमसौ सदा बहुविधं केनाप्युपायेन मां
पापात्मा स रुषेति मूढ कुरुषे कस्माद्वृथा चिन्तनम् ।
तत्तद्दुश्चरितैर्हि रौरवगताः[8] कालान्तरे केवलं
नन्वेतत्सदृशाः पुनर्झटिति नः ख्यास्यन्ति मार्गं स्मृतेः[9] ॥ ११७ ॥
स्वामी[10] दासजनं वदेदिति वयोवृद्धं कदाचिद्वचो
भोक्तृत्वं कति यापिता नु भवता वर्षाश्च मासोऽथवा ।
उद्यम्येति करौ तदा प्रतिवदेद्भृत्यः स वृद्धः प्रभुं
सेवायै भवतां ससर्ज नियतिः पूर्वं प्रभोः सेवकम् ॥ ११८ ॥

---

१ रामलक्ष्मणौ. २ राक्षसः. ३ रामायणीयो विषयोयं तत्रैव दृश्यः. ४ निर्वाहरूपो महिमा. ५ काचिद्वार्त्तेयम्. ६ अपक्वं फलम्. ७ अन्योक्तिरेषा. ८ तदाख्यो नरकविशेषः ९ स्मृता भविष्यन्ति. १० कस्याश्चिल्लोकवार्त्तायाः पद्यमिदं.

एका[1] क्ष्माभृति कीटिका चलति सेत्यन्धेन दिग्दर्शिता
भूत्वोच्चैर्बधिरेण चाऽपि विपुलः शब्दस्त्विति स्वीकृतम् ।
दण्डं दोषणि पङ्गुना कृतवता यामेति किञ्चोत्थितं
कोप्यस्मान् प्रतरिष्यतीति सहसा नग्नेन भीतं ततः ॥ ११९ ॥

तत्तज्जन्मविहारभूमिविलसत्संचारणामर्षणै-
श्चञ्चन्मित्रविचित्रचाटुचरितध्यानैश्चमत्कारिभिः ।
फुल्लाम्भोरुहकेसराद्भुतरसास्वादैरलं चिन्तितैः
कादम्बार्भक सांप्रतं परवशात्प्राप्तोऽसि यत्पञ्जरम् ॥ १२० ॥

प्रीतिर्दीर्घतरा[2] त्वयीति कथनं वाराङ्गनोक्त्या समं
प्राप्योऽसीति पुनर्विमृष्य वचनं सौभाग्यदर्पोद्धुरम् ।
इत्युक्तं प्रसभं श्रितोऽसि कुलटाधार्ष्ट्यप्रधानं हि त-
त्कान्तैवं मम मूकतैव सपदि प्रश्नोत्तरे तावके ॥ १२१ ॥

आकाशे निशि भाति काचिदनलक्रीडा[3] पटुप्रोज्झिता
खर्जूरीव पिशङ्गसुन्दरफला नीचैः शिखाशालिनी ।
अत्यन्तप्रसृतश्च भाति सुचिरं धूमस्तदीयोऽभितो
भ्राम्यत्तोयधरस्य राशिरिव किं श्यावां छविं संदधत् ॥१२२॥

नीचैर्भूमिमिवातनोति जलधेर्धूनाति वारीव च
ग्रावण: प्रोत्खनतीव शत्रुवनितागर्भान्भिनत्तीव च ।
अभ्रं पातयतीव दिग्गजभयं वक्तीव च प्रायशः
कश्चित्संप्रति मेघनादसदृशस्तोपध्वनिः[4] श्रूयते ॥ १२३ ॥

सिद्धिमद्विविधमन्त्रवेदिने सर्वनास्तिकमनुष्यखेदिने ।
दिव्यभेषजगदौघभेदिने स्युर्नमांसि मम सामवेदिने[5] ॥ १२४ ॥

मज्जिह्वा तु भृशं जाता भवत्स्तोत्रभरैर्नता ।
मदर्थे लेखिनीमात्रभारोऽपि न भवत्करे ॥ १२५ ॥

---

१ इयमपि तादृक्काचिद्विचित्रा मन्दबुद्धिसंबन्धिनी वार्तैव. २ एष दम्पत्योरालापः. ३ यस्या लोके हवाई इति सुप्रसिद्धं नाम. ४ दुर्गस्थतोपध्वनिरेतादृश एव. ५ कस्मैचित्काशीनिवासिने ब्राह्मणाय पठितसामवेदाय.

गुरवः पितरौ हि केवलं सुहृदो वाप्यथ साधवः क्रमात् ।
षडमी मुदमुद्वहन्ति तामिह शिष्यस्य तु वीक्ष्य योग्यताम्[1] ॥ १२६ ॥
विशालवीणाकपटेन भारती निबध्य युग्मं पृथुतुम्बिकायाः ।
अद्यापि नैतस्य ततार पारं शब्दोदधेस्तत्र नरस्य का कथा ॥ १२७ ॥
येषां सन्त्युदयाः पुरेष्वथ च ये पीठोत्सवं भुञ्जते
पृथ्वीं बिभ्रति नीतितः किल समुद्रान्तां जयाढ्याश्च ये ।
पूर्णाः[2] सैन्धवकुञ्जरैश्च दधते तामृद्धिवृद्ध्युन्नतिं
राजन् भान्ति भिषङ्नृपा वयमिमे ते मण्डलीरक्षकाः ॥ १२८ ॥
अप्यप्रयोजका[3] एते श्लोका विख्यापिता मया ।
विसरेद्गणनाकाले स्वान्दुष्टानपि को बुधः ॥ १२९ ॥
श्लोकैर्निर्माणदम्भाढ्यो वर्णविन्यासलीलया ।
शिक्षितः कोप्ययं यत्नाच्छन्दोऽभ्यासविधिर्मया[4] ॥ १३० ॥

इति श्रीकविमल्लभट्टहरिवल्लभकृतिषु मुक्तकसूक्तानि पूर्णानि ॥



१ अन्यानपेक्षां. २ अत्र वैद्यपक्षीयोर्थस्तत्तद्दोषधश्लिष्टनामज्ञानात्कार्यः प्रकृतेनात्युपयुक्तः. ३ चमत्काराप्रयोजका इत्यर्थः. ४ एतेन विद्वद्भिर्ममावद्याः क्षम्या इति द्योत्यते.

अथ

# श्रीकविमलभट्टहरिवल्लभगीतम्

# देवीस्तोत्रम्

## श्रीमदेकलिङ्गो जयति ।

---

विमलललिततमगलवलयमहमहितस्फुर्ट[1]केवि ।
प्रतिभामृतकादम्बिनी जय जय भारति देवि ॥ १ ॥
सततविनतिततिकृतिनिरतशतधृतिशिति[2]गलशौरि ।
भगवति तव पदपङ्कजं भवतु मुदे मम गौरि ॥ २ ॥
अटवीसमटनसंघटितबहुविधफलसुम[3]कौरि ।
शबरीरूपनिरूपिते जय जय भगवति गौरि ॥ ३ ॥
शिथिलीकृतसमरावसरहरिणाधिपमुखर[4]दौरि ।
महिषविपुलगलविदलिनी जय जय भगवति गौरि ॥ ४ ॥
सकलचराचरसंसरणबहुविधपोषण[5]धौरि ।
आगमनिगमसतत्त्वमयि जय जय भगवति गौरि ॥ ५ ॥
अवलोकनसंमुखदयितलोचनमानसचौरि ।
अभयदानबहुमानवति जय जय भगवति गौरि ॥ ६ ॥
अधरयुगोदरदितिजधृतिसमयसारित[6]सौरि ।
शिखरिसुते मुनिजननुते जय जय भगवति गौरि ॥ ७ ॥
अभिमुखसखुखकृताभिनयनटदशेषसुरपौरि ।
वीटीरसशोणाधरे जय जय भगवति गौरि ॥ ८ ॥
द्वारदेशसंततनदद्विविधतारतर[7]तौरि ।
कुङ्कुमतिलकधरालिके जय जय भगवति गौरि ॥ ९ ॥

---

१ केवी नामकः कश्चित्सुरभिपुष्पविशेषः. २ शिवः. ३ कुरीनाम तृणधान्यभेदस्तस्या इदं कौरं स्त्री चेत्कौरी. ४ दोरो रज्जुस्तस्य संहतिर्दौरी वल्गेति यावत्. ५ धुरा भारस्तस्या इयं ईः शोभा धौरीः. ६ सौरिः शनिस्तस्य ईः सौरीः. ७ तूरं वाद्यम् तस्य इदं तौरं स्त्री तौरी तूरपटलीत्यर्थः.

अरुणनयनतलतरलरुचिरञ्जितकपोलपालि ।
ललितधवलरदवलयिनी जय जय भगवति कालि ॥ १० ॥
वलयितनिखिलसखीसविधवादितमृदुकरतालि ।
मधुरमधुरपदगायनी जय जय भगवति कालि ॥ ११ ॥
अतनुदशनवसनारुणिमलज्जितनवीनभण्डि[1] ।
आकुञ्चितमेचककचे जय जय भगवति चण्डि ॥ १२ ॥
मुकुलायितलोचनकरं सकलैस्त्वमेव देवि ।
यदा यदा विपदुपगता तदा तदा समसेवि ॥ १३ ॥

हस्तकमलसंस्थितललितनिर्मलतरमुकुरसुवृत्तबिम्बबिम्बितवक्त्रकले[2]
मन्दमारुतकम्पितपीतनूतनविशालचीनपटकोटिदृष्टपाटलवपुस्तले ।
गौरतलगण्डयुग्ममध्यमण्डलसततचर्वितसरसनागनामकलतादले
जय जय कम्बुगले विनिहतसर्वखले हृतनिजभक्तकलि[3] देवि गिरिशाबले १४

कुन्दनलालतनूभुवा वैरिशिरोभल्लेन ।
एषा कुलदेवीस्तुतिर्गीता कविमल्लेन ॥ १५ ॥

रङ्गे मल्लवरात्कुतोप्यधिगता व्यायामविद्या पुरा
पश्चाच्चारुविशिक्षिता चिरतरं गीतेरपि प्रक्रिया ।
शास्त्रार्थं गुरवोऽनु कीर्तिगुरवस्तेते चिरं संश्रिता
रच्यन्तेऽद्य तु संततं जयपुरे काव्यानि कामं मया ॥ १ ॥
जयपुरि पुराणवसतौ गणगौरीगोपुरोत्तरश्रेणीम् ।
कौन्दनिरधिवसति कविर्हरिवल्लभनामविख्यातः ॥ २ ॥
एतानि प्रकटीकृतानि सहसा काव्यानि नव्यानि त-
द्भीतिः काचिदशुद्धिजा बहुविधं मां बाधते यद्यपि ।
चिन्ता नास्ति परन्तु काचन भृशं चित्ते न मे जायते
कुर्वन्ति प्रणयान्ममोपरि कृपां दिष्ट्या यतः पण्डिताः ॥ ३ ॥

---

१ भण्डी मञ्जिष्ठा. २ वक्त्रस्य कला देशो वक्त्रप्रान्त इत्यर्थः. ३ कलिः क्लेशः ... समासान्तशास्त्रस्य अनित्यत्वादप्रत्ययो न कृत इति.